पत्रालयद्वारा संस्कृतम्

# परिचयः

# PARICHAYAH

संस्कृतभारती

बेङ्गलूरु

पत्रालयद्वारा संस्कृतम्

# परिचयः

# PARICHAYAH

संस्कृतभारती

बेङ्गलूरु

# अनुक्रमणिका

ॐ

# संस्कृतभारती
# पत्रालयद्वारा संस्कृतम्

## परिचयः - प्रथमः पाठः

कार्याणां कर्मणा पारं यो गच्छति स बुद्धिमान् । - *रामायणम्*
He who achieves his end with effort, is indeed wise.

Dear friend,
We extend our greetings to you, who are participating in our Samskrit Education Scheme. It is necessary for you to revise the lessons of the 'Pravesha' Course. Devote some time in your daily routine to the study of Samskrit. We are now placing in your hands the first lesson of 'Parichaya' which is the Second Course in our scheme. शुभं भूयात् ।

## पुनःस्मरणम्

Before proceeding to the next level let us recapitulate the important points from the books that you have studied in Pravesha.

**I.** In the first level you were taught verbal forms in the present, future and past tenses and also imperative mood (लोट्).

**i. वर्तमाने** - बालः शालां गच्छति । - The boy goes to school.
त्वं गृहं गच्छसि । - You (singular) go home.
अहं ग्रामं गच्छामि । - I go to the village.

**ii. भविष्यति -**

छात्रः मन्दिरं गमिष्यति । - The boy will go to the temple.
त्वम् आपणं गमिष्यसि । - You will go to the shop.
अहम् उद्यानं गमिष्यामि । - I will go to the park.

**iii. भूते -** सेवकः नदीम् अगच्छत् । - The servant went to the river.

त्वं काशीम् अगच्छः । - You went to Kaśī.

अहं वनम् अगच्छम् । - I went to the forest.

Note: Instead of the past tense forms (लङ्लकाररूपाणि) you may use गतवान् (ए.व.), गतवन्तौ (द्वि.व.), गतवन्तः (ब.व.) in masculine gender and गतवती (ए.व.) गतवत्यौ (द्वि.व.) गतवत्यः (ब.व.) in feminine gender.

**iv. प्रार्थनादिषु -**

सः गृहं गच्छतु । - He may go home/Let him go home.

त्वं वाटिकां गच्छ । - You go to the grove.

अहं प्रकोष्ठं गच्छानि ? - May I go to the room ?

The forms of verbs in the three persons and numbers, are as in the table below -

| | **वर्तमाने** | | | **भविष्यत्काले** | | |
|---|---|---|---|---|---|---|
| | *ए.व.* | *द्वि.व.* | *ब.व.* | *ए.व.* | *द्वि.व.* | *ब.व.* |
| *प्र.पु.* | पठति | पठतः | पठन्ति | पठिष्यति | पठिष्यतः | पठिष्यन्ति |
| *म.पु.* | पठसि | पठथः | पठथ | पठिष्यसि | पठिष्यथः | पठिष्यथ |
| *उ.पु.* | पठामि | पठावः | पठामः | पठिष्यामि | पठिष्यावः | पठिष्यामः |
| | **भूते** | | | **प्रार्थनादिषु** | | |
| | अपठत् | अपठताम् | अपठन् | पठतु/पठतात् | पठताम् | पठन्तु |
| | अपठः | अपठतम् | अपठत | पठ/पठतात् | पठतम् | पठत |
| | अपठम् | अपठाव | अपठाम | पठानि | पठाव | पठाम |

All the above conjugations are of parasmaipada.

**II.** In Atmanepada verbal forms are as follows.

| **वर्तमाने** | | | **भविष्यति** | | |
|---|---|---|---|---|---|
| वन्दते | वन्देते | वन्दन्ते | वन्दिष्यते | वन्दिष्येते | वन्दिष्यन्ते |
| वन्दसे | वन्देथे | वन्दध्वे | वन्दिष्यसे | वन्दिष्येथे | वन्दिष्यध्वे |
| वन्दे | वन्दावहे | वन्दामहे | वन्दिष्ये | वन्दिष्यावहे | वन्दिष्यामहे |

| भूते | | | प्रार्थनादिषु | | |
|---|---|---|---|---|---|
| अवन्दत | अवन्देताम् | अवन्दन्त | वन्दताम् | वन्देताम् | वन्दन्ताम् |
| अवन्दथाः | अवन्देथाम् | अवन्दध्वम् | वन्दस्व | वन्देथाम् | वन्दध्वम् |
| अवन्दे | अवन्दावहि | अवन्दामहि | वन्दै | वन्दावहै | वन्दामहै |

**III.** In the previous level you have learnt about the seven case endings (विभक्तयः) -

**प्रथमा** - Nominative case . **बालः** गच्छति । - The boy goes.
**जनाः** गच्छन्ति । - People go.

**द्वितीया** - Accusative case

**i.** कर्मपदम् (the object) takes the accusative case.
सः **चित्रं** लिखति ।

**ii.** When the verbs अधिवसति and अधितिष्ठति are used the word that denotes the location, takes the accusative case.
व्याघ्रः **वनम्** अधितिष्ठति ।

**iii.** The indeclinables अभितः, परितः etc., govern a noun in the accusative case.
**गृहम्** अभितः उद्यानम् अस्ति ।
भ्रमरः **पुष्पं** परितः भ्रमति ।

**iv.** Words related to विना take the accusative case optionally. Eg - **जलं** विना मीनः न जीवति ।
(They can be used in the instrumental case - **तृतीया** or ablative case - **पञ्चमी** )

**तृतीया** - Instrumental case

**i.** The word that conveys the instrument of an action takes the Instrumental case.
कृषीवलः **हलेन** कर्षति ।

**ii.** The indeclinables सह, साकम्, सार्धम् etc. govern the instrumental case.
अहं **जनकेन** सह / साकं / सार्धं नगरं गच्छामि ।

iii. An adverb denoting an abstract thing (भाववाचक-क्रियाविशेषणम्) takes the instrumental case.
सः **सन्तोषेण** संस्कृतं पठति ।

**चतुर्थी** - Dative case

i. When a thing is given away the word denoting the person who receives it takes the dative case.
वैद्यः **रुग्णाय** औषधं यच्छति ।

ii. The word that denotes the purpose of an action is in the dative case.
कविः **कीर्त्यै** काव्यं लिखति ।

iii. When a thing results in another, the word expressing the latter gets the dative case.
विद्या **ज्ञानाय** कल्पते ।

iv. When असूयति, क्रुध्यति, द्रुह्यति and such verbs are used the word that denotes the person at whom the feeling of anger is directed takes the dative case.
निर्धनः **धनिकाय** असूयति / क्रुध्यति /द्रुह्यति ।

v. When the verb 'रोचते' is used, the person who is pleased takes the dative case.
**मह्यं** मधुरं रोचते ।

vi. The Indeclinables नमः, स्वस्ति etc. govern the dative.
**गुरवे** नमः । **प्रजाभ्यः** स्वस्ति ।

vii. The word denoting destination can be used in dative case instead of the accusative case when the verb 'गच्छति' is used.
अतिथिः **गृहाय** गच्छति ।

**पञ्चमी** - Ablative case

i. When separation of two things is meant the word denoting the one that is stable, takes the ablative case. **वृक्षात्** पर्णं पतति ।

ii. When words denoting fear are used that which

denotes the cause of fear takes the ablative case.

मम **सर्पात्** भीतिः ।

**iii.** When 'रक्षति'- 'protection' is meant, the word denoting that from which protection is given, takes the ablative case.

भगवान् **अपायात्** मां रक्षितवान् ।

**iv.** पूर्वः, परः etc., govern the ablative.

भरतः **लक्ष्मणात्** पूर्वः । वैशाखः **चैत्रात्** परः ।

**षष्ठी** - Genitive case

**i.** Genitive case conveys possession.

**नद्याः** जलम् । **मम** सहोदरः ।

**ii.** When any person is singled out of a group the word denoting the group takes the genitive case. **पाण्डवानां** धर्मराजः श्रेष्ठः ।

**सप्तमी** - Locative case

**i.** A word denoting location takes the locative case.

कमलानि **सरोवरे** सन्ति ।

**ii.** Words denoting time take the locative case.

अहं **सायङ्काले** गच्छामि । **भानुवासरे** विरामः भवति ।

**iii.** When a person is singled out of a group locative case can be used instead of the genitive.

**मानवेषु** क्षत्रियाः शूराः।

**सम्बोधना** - Vocative case

To draw the attention of a person Vocative case of address is used. Only in singular the Vocative forms of words differ from the nominative. In dual and plural they are the same as those of the nominative case.

**हे राम** ! अत्र आगच्छ । **अयि जनाः** ! एतत् शृणुत ।

**IV.** You have learnt that there are ten Lakaras namely लट्, लिट् etc., and that roots of verbs are classified into ten categories as भ्वादिः, अदादिः...etc. You have also learnt the rules relating to

Active voice and also Prepositions.

V. You have learnt the use of suffixes क्त्वा, ल्यप् and तुमुन्

**क्त्वा** - रामः पाठं **पठित्वा** निद्रां करोति ।
**ल्यप्** - सः **उत्थाय** उत्तरम् उक्तवान् ।
**तुमुन्** - जनाः धनं **सम्पादयितुम्** इच्छन्ति ।

In this lesson and the following ones you will be learning about विशेष्य-विशेषणभावः, कर्मणिप्रयोगः, भावेप्रयोगः, सन्धिः etc., in detail.

## १. भाषाभ्यासः
## विशेष्य-विशेषणभावः - १

1. Study the following sentences.

१. **नीलः** मेघः चलति । The dark cloud moves.
२. **उन्नतः** नारिकेलवृक्षः अस्ति । There is a tall coconut tree.
३. सा **चतुरा** बालिका । She is a clever girl.
४. **सुन्दरं** नगरं भारते अस्ति । There is the beautiful city in India.
५. **कातरा**[1] स्त्री वेपते[2] ।
६. सा **मलिनं** वस्त्रं क्षालयति ।
७. वृक्षे **उत्तमं** फलम् अस्ति ।
८. **उदारः** पुरुषः देशे विरलः ।
९. **विधेयः** छात्रः अत्र अस्ति ।
१०. अम्ब ! एषा **उत्तमा** शाटिका अस्ति ।
११. **चतुरः** बालकः सर्वदा चिन्तयति ।
१२. [3]स्यूते **समीचीना** लेखनी अस्ति ।
१३. भगवद्गीतायाम् **उत्तमः** विचारः अस्ति ।
१४. **सुन्दरी** बालिका नृत्यति ।
१५. **पण्डितः** शिक्षकः सम्यक् पाठयति ।

In the above sentences, the bold words are called Adjectives (विशेषणानि). An adjective describes the qualities of a noun.

उदाः - नीलः मेघः = Dark cloud.

---

1. कातरा - afraid 2. वेपते - trembles 3. स्यूतः - bag

In this sentence as the word 'नील' qualifies 'मेघ' it is called विशेषणम् (adjective). मेघः is the विशेष्यम् (noun) Substantive.

Note the following rule regarding the Noun - Adjective relationship विशेष्यविशेषणभावः ।

उदा - उत्तमः बालकः । उत्तमा बालिका । उत्तमं पुस्तकम् ।

In the above sentences the words बालकः, बालिका and पुस्तकम् are in the masculine, feminine and neuter gender. Accordingly, the adjective उत्तम is in the same gender. Therefore, उत्तमः पुस्तकम् or उत्तमं बालकः is grammatically wrong.

2. Study the following sentences.

१. सुन्दराः तरुणाः तत्र तिष्ठन्ति ।
२. चतुराः बालकाः नदीं तरन्ति[4] ।
३. क्रूराः मृगाः अरण्ये विहरन्ति ।
४. वृक्षे उत्तमानि पुष्पाणि विकसन्ति ।
५. दुष्टाः चोराः आरक्षकात् बिभ्यति[5] ।
६. दीर्घाः लताः वायुना कम्पन्ते ।
७. उद्याने उत्तमानि सस्यानि वर्धन्ते ।
८. जीवने अनेकानि कष्टानि भवन्ति ।
९. ग्रन्थालये समीचीनौ ग्रन्थौ स्तः ।
१०. बुद्धिमत्यौ बालिके सम्यक् पठतः ।
११. कार्यक्रमे दक्षाः कार्यकर्तारः विराजन्ते ।
१२. अलसौ बालकौ शीघ्रं शयाते[6] ।
१३. वृक्षे उत्तमे पुष्पे स्तः ।
१४. चतुरे युवत्यौ मार्गे गच्छतः ।
१५. भोः सौचिक ! सुन्दराणि वस्त्राणि सन्ति खलु ?

In the above sentences, तरुणाः, बालकाः etc., are in plural बालिके, ग्रन्थौ etc., are in dual. These are substantives. Similarly, सुन्दराः, चतुराः, समीचीनौ, बुद्धिमत्यौ etc., are adjectives. These adjectives are in the number of the nouns they qualify. If the noun is in dual the adjective also is in dual number and if the noun is in plural

4. तरन्ति - cross, 5. बिभ्यति - are afraid, 6. शयाते - lie down (dual)

the adjective also is in plural. You would have noted in the earlier examples that if the noun is in singular the adjective also is in singular. You have so far understood that the adjective and noun should agree in gender and number.

Besides these two, adjectives and nouns also agree in case-

उदा - १. शिक्षकः **विनीतान् छात्रान्** आह्वयति ।

२. जनाः **उत्तमेषु जनेषु** विश्वसन्ति ।

३. **उदयमानस्य सूर्यस्य** किरणान् दृष्ट्वा जनाः हृष्यन्ति ।

You will learn more examples for this in the coming lessons.

So, you have learnt that Adjectives and nouns mutually agree in gender, number and case. The following sloka states the above rule.

यल्लिङ्गं यद्वचनं या च विभक्तिः विशेष्यस्य ।
तल्लिङ्गं तद्वचनं सा च विभक्तिः विशेषणस्यापि ।।

Whatever is the gender, number and case of the विशेष्यम्, so is the gender, number and case of the विशेषणम् (Adjective).

## अभ्यासः

1. Separate the following words into विशेषणम् and विशेष्यम्.

नीलः, उन्नतः, वृक्षः, रामः, बुद्धिमान्, छात्रः, उत्तमा, चतुरा, गृहिणी, बालिका, सुन्दरी, लेखनी, मलिनम्, फलम्, श्वेतम्, द्वारम्, विशालम्, गृहम्

विशेषणानि - १. ........... २. ........... ३. ...........
४. ........... ५. ........... ६. ...........
७. ........... ८. ........... ९. ...........

विशेष्याणि - १. ........... २. ........... ३. ...........
४. ........... ५. ........... ६. ...........
७. ........... ८. ........... ९. ...........

2. According to the gender and number of the विशेष्य, fill in the blanks with the appropriate forms of the word 'उत्तम' ।

उदा - उत्तमौ बालकौ ।

१. ............ लेखनी । २. ............ पुस्तकम् ।
३. ............ बालिकाः । ४. ............ पाठाः ।
५. ............ ग्रन्थौ । ६. ............ सस्यानि ।
७. ............ पुष्पे । ८. ............ नार्यौ ।
९. ............ छात्रः । १०. ............ तरुणौ ।

3. Match the following.

| अ | आ |
|---|---|
| १. समीचीनः | लताः |
| २. अलसौ | पुष्पम् |
| ३. दीर्घाः | सैनिक ! |
| ४. सुन्दरम् | लेखन्यौ |
| ५. सुन्दर्यौ | कथा |
| ६. श्रेष्ठा | बालकः |
| ७. मधुराणि | तरुणौ |
| ८. धीर ! | फलानि |

4. State how should he/it be and how not to be.

उदा - जनाः धार्मिकाः भवन्तु । अधार्मिकाः न भवन्तु ।
(धार्मिक/अधार्मिक)

१. बालकः ........ भवतु । ........ न भवतु ।
(निद्राशील/अध्ययनशील)

२. चिन्तनम् ........ भवतु । ........ न भवतु । (उत्तम/अधम)

३. वाक्यानि ........ भवन्तु । ........ न भवन्तु । (कठिन/सरल)

४. जलं ........ भवतु । ........ न भवतु । (निर्मल/मलिन)

५. छात्राः ........ भवन्तु । ........ न भवन्तु । (उत्तीर्ण/अनुत्तीर्ण)

5. (अ) Point out the विशेषणम् in the following sentences.

१. धीराः बालकाः उन्नतिं प्राप्नुवन्ति ।
२. उन्नतः वृक्षः उद्याने अस्ति ।
३. सुन्दरं मुखपुटचित्रं मह्यं रोचते ।

४. अलसौ बालकौ कार्यं न कुरुतः ।

५. पक्वानि फलानि वृक्षे सन्ति ।

(आ) Point out the विशेष्यम् in the following sentences.

१. भगवद्गीतायाम् उत्तमाः विचाराः सन्ति ।

२. सज्जनः पुरुषः परोपकारं करोति ।

३. अगस्त्यः उन्नतः नास्ति ।

४. आमलकानि आम्लानि भवन्ति ।

५. चतुराः महिलाः सुखेन जीवन्ति । **(Answers on PNo - 231)**

## २. व्यावहारिकशब्दावली

Words conveying relationship

| | |
|---|---|
| अकारान्तशब्दाः - Words ending in 'अ' | श्यालः - brother-in-law (wife's brother) |
| | देवरः - brother-in-law (husband's brother) |
| | प्रपितामहः - Paternal great grand father |
| | पितृव्यः - Paternal uncle (father's brother) |
| | दौहित्रः - grand son (daughter's son) |
| | प्रपौत्रः - great grand son (son's son's son) |
| | भागिनेयः - nephew (sister's son) |
| | भ्रातृव्यः - nephew (brother's son) |
| आकारान्तशब्दाः | पितृव्या - Aunt (Paternal uncle's wife) |
| ईकारान्तशब्दाः | प्रपितामही - Paternal grand mother |
| | पितृभगिनी/पितृष्वसा - Aunt (father's sister) |
| | मातृभगिनी/मातृष्वसा - Aunt (mother's sister) |
| | दौहित्री - grand daughter(daughter's daughter) |
| | प्रपौत्री - great grand daughter (son's son's daughter) |
| ऋकारान्तशब्दाः - | याता - sister-in-law (husband's brother's wife) |
| | ननान्दा - sister-in-law ( husband's sister) |
| | विमाता - step mother |

## ३. चाटुश्लोकः (Witty Saying)

A learned man had a well-read daughter. She made a point of testing the learning of those youths who sought her hand in marriage. Once a prospective bridegroom came. His knowledge was limited to the declension of रामशब्द. Yet he thought of himself as a learned man . The girl asked him - "In which विभक्ति are the words 'विहस्य(having smiled) and विहाय(except) ?' The youth answered that they are in the Genitive (षष्ठी) and the Dative (चतुर्थी) cases respectively. Again the young lady asked him: "What is the case ending of अहम् ? The young man replied that it is in the Accusative case (द्वितीया), remembering रामम् in the Accusative case. You know that the answers given by the youth are not correct. In fact विहस्य and विहाय are not noun forms (सुबन्त) at all. They are indeclinables (ल्यबन्ताव्यये). अहम् is not in the Accusative case, but in the Nominative case. The daughter of the learned man could immediately make out that the young man's knowledge was limited to only रामशब्द. She said to her father-

यस्य षष्ठी चतुर्थी च विहस्य च विहाय च ।
यस्याहं च द्वितीया स्यात् द्वितीया स्यामहं कथम् ।।

How can I become a second (द्वितीया) to him ie., a wife to him ? He who declares that विहस्य and विहाय are in the Genitive and Dative cases and अहम् is in the Accusative case.

## ४. समस्या - RIDDLE

Some sentences are inconsistent when viewed superficially. But when another related sentence is put along side it in context, the meaning of the former becomes clear. Slokas that contain such statements, are called 'Samasyas'. Here is a samasya-

'वर्षस्यैकं दिनं गौरी पतिवक्त्रं न पश्यति'

Parvati does not see her husband Ishwara's face one day in a year.The solution for this Samasya is simple.

'भाद्रशुक्लचतुर्थ्यां तु चन्द्रदर्शनशङ्कया'

There is a belief that if one sees the moon on the day of *Chaturthī* of *Bhadrapada Śukla Pakṣa* he will get the blame of stealing something. Because of the fear of seeing the moon on Iśwara's head Gowrī does not see his face on that particular day.

## ५. सुभाषितम्

आशाया ये दासास्ते दासास्सर्वलोकस्य ।
आशा येषां दासी तेषां दासायते लोकः ।।१।।

**पदविभागः** - आशायाः, ये, दासाः, ते, दासाः, सर्वलोकस्य, आशा, येषाम्, दासी, तेषाम्, दासायते, लोकः ।।

**प्रतिपदार्थः** - ते - Those, ये - who, दासाः - are slaves, आशायाः - of desire, दासाः - are slaves, सर्वलोकस्य - of the entire world. लोकः - The world itself, दासायते - acts like a slave, तेषाम् - of those (i.e., to those) येषाम् - to whom, आशा - desire, दासी - is a slave.

**तात्पर्यम्** - Those who are the slaves of 'desire' are slaves of the entire world. But those who have no desire, have the whole world under their control.

साधूनां दर्शनं पुण्यं तीर्थभूता हि साधवः ।
तीर्थं फलति कालेन सद्यः साधुसमागमः ।।२।।

**पदविभागः** - साधूनाम्, दर्शनम्, पुण्यम्, तीर्थभूताः, हि, साधवः, तीर्थम्, फलति, कालेन, सद्यः, साधुसमागमः ।

**प्रतिपदार्थः** - दर्शनम् - The sight (Seeing), साधूनाम् - of noble men, पुण्यम् - brings merit. (Because) साधवः - noble men, तीर्थभूताः हि - are indeed like holy places. (However,) तीर्थम् - (a visit to) a holy place, फलति - bears fruit, कालेन - after a lapse of time, साधुसमागमः - meeting with noblemen, फलति - yields results, सद्यः - instantly.

**तात्पर्यम्** - People go on a pilgrimage for it is considered holy.

Meeting pious men is as meritorious as visiting pilgrim centres. Perhaps even more. Because the fruit of visiting holy places is got after a long time - may be in the next birth also. But the very sight of pious men cleanses men of all sins and brings merit at once.

## ६. पदसङ्ग्रहः Vocabulary

The roots of verbs are called Dhatus (धातवः). Various forms can be derived when suffixes of various kinds are added to these roots. Besides तिङ्, suffixes called 'कृत्' are also added to roots. The forms that are thus derived are called कृदन्त. In the subsequent lesson we will introduce you to the frequently used कृदन्त forms (participles).

**धातुः - पठ्** - to read

१. पठति २. पठ्यते ३. पठिष्यति (तिङन्त)
४. पठितव्यम् - पठनीयम् ५. पठितः - पठिता - पठितम् ६. पठितवान् - पठितवती ७. पठन् - पठन्ती ८. पठित्वा - प्रपठ्य ९. पठितुम् ।

In the forms shown above the first two are in कर्तरि Active Voice and कर्मणि Passive Voice respectively. The rules of Active voice are given in Pravesha lessons. Study them again.The rules of Passive voice will be given in the coming lessons.

The third form is of future tense. पठिष्यति - 'will read'. The forms from the fourth onwards are the important participles (कृदन्तानि) of the धातु 'पठ्'

These can be used in sentences as given below -

१. छात्रः पठति । - The student reads.
२. छात्रेण पठ्यते । - - It is read by the student.
३. छात्रः मासानन्तरं पठिष्यति । - The student will read after a month.
४. त्वया पुस्तकं **पठितव्यम्** । - The book should be read by you.
त्वया पुस्तकं **पठनीयम्** । - The book should be read by you.
(पठितव्यम्, पठनीयम् - Both the forms have the same sense.)
५. तेन श्लोकः **पठितः** । - The stanza was recited by him.

तेन गीता **पठिता** । - The Gita (Bhagavad Gita) was read by him.

तेन पद्यं **पठितम्** । - The poem was read by him.

६. छात्रः **पठितवान्** । - The student read.

सीता **पठितवती** । - Sīta read.

७. अलसः **पठन्** निद्रां करोति । - A lazy person sleeps off while reading.

सीता **पठन्ती** भोजनं करोति । - Seeta eats while reading.

८. अहं **पठित्वा** गच्छामि । - I go after reading.

छात्रः **प्रपठ्य** परीक्षां गच्छति । - The student goes to the examination after reading thoroughly.

९. अलसः **पठितुं** न इच्छति । - The lazy one does not like to read.

In the 8th sentence above **'प्रपठ्य'** is an indeclinable ending in 'ल्यप्'(ल्यबन्तम्). Generally, this gives the same meaning as the indeclinable ending in क्त्वा.

Sentences from 4 to 9 contain Participle forms. Of these -

* 4 and 5 are in Passive voice.
* 6 and 7 are in Active voice.
* 8 and 9 have indeclinable participles. They can be used both in Active and Passive voices without any change in form.
* Participles found in sentences 4, 5, 6 and 7 are declined in all genders, numbers and cases.

Their plural forms are -

४. त्वया पुस्तकानि पठितव्यानि । - The books should be read by you.

त्वया पुस्तकानि पठनीयानि । - The books should be read by you.

५. तेन श्लोकाः पठिताः । - The stanzas were read by him.

तेन कथाः पठिताः । - The stories were read by him.

तेन पद्यानि पठितानि । - The poems were read by him.

६. छात्राः पठितवन्तः । - The students read.

बालिकाः पठितवत्यः । - Girls read.

७. अलसाः पठन्तः निद्रां कुर्वन्ति । - The lazy sleep while reading.

बालिकाः पठन्त्यः निद्रां कुर्वन्ति । - Girls sleep while reading.

Below कृदन्त and तिङन्त of a few verb roots are given. Try to use them in sentences.

**गम्** - to go

१. गच्छति २. गम्यते ३. गमिष्यति

४. गन्तव्यम् - गमनीयम् ५. गतः - गता - गतम् ६. गतवान् - गतवती

७. गच्छन् - गच्छन्ती ८. गत्वा - आगत्य (having come) ९. गन्तुम् ।

**पा** - to drink

१. पिबति २. पीयते ३. पास्यति

४. पातव्यम् - पानीयम् ५. पीतः - पीता - पीतम् ६. पीतवान् - पीतवती ७. पिबन् - पिबन्ती ८. पीत्वा - आपीय ९. पातुम् ।

**नम्** - to salute

१. नमति २. नम्यते ३. नंस्यति

४. नन्तव्यम् - नमनीयम् ५. नतः - नता - नतम् ६. नतवान् - नतवती ७. नमन् - नमन्ती ८. नत्वा - प्रणम्य ९. नन्तुम् ।

Note : To learn the forms given above use them in your own sentences.

## ७. काव्यकथा

You were introduced to the पञ्चमहाकाव्यs in the previous course *Raghuvamśa* is one of them. Its author is the great poet Kālidasa. It consists of 19 cantos (सर्गाः). The story of *Raghuvamśa Mahākāvya* is given in lucid Samskrit in this and the succeeding lessons in simple prose. There are a few questions after the story. Read the story carefully and answer them.

### ।। दिलीपस्य शापवृत्तान्तः ।।

दिलीपः सूर्यवंशस्य नृपः । तस्य सुतः रघुः । रघुराजः प्रसिद्धः । अतः अयं वंशः 'रघुवंशः' इति ख्यातः । रघुवंशे वैवस्वतमनुः प्रथमः पुरुषः ।

दिलीपः प्रजावत्सलः आसीत् । सुदक्षिणा तस्य पत्नी । दिलीपः बहुकालं पुत्ररहितः आसीत् । अतः सः चिन्ताक्रान्तः अभवत् । वसिष्ठः दिलीपस्य आचार्यः । दिलीपः वसिष्ठं द्रष्टुं सङ्कल्पितवान् । अतः सः सचिवेषु

राज्यभारं निक्षिप्तवान् । सुदक्षिणासहितः वसिष्ठाश्रमं गतवान् । तत्र नृपः वसिष्ठाय स्वचिन्तां निवेदितवान् । 'कुतः मम सन्ततिः नास्ति ?' इति प्रश्नं कृतवान् ।

वसिष्ठः कारणम् अचिन्तयत् । आचार्यः अकथयत् - 'नृप ! त्वं कदाचित् स्वर्गं गतवान् । तत्र त्वं देवेन्द्रं सेवितवान् । ततः त्वं प्रत्यागतवान् । तदा मार्गमध्ये कामधेनुः आसीत् । सा कल्पवृक्षस्य छायायाम् आसीत् । त्वं कामधेनुं न दृष्टवान् । न च नमस्कृतवान् । कामधेनुः कुपिता अभवत् । शापं दत्तवती । अतः तव सन्ततिः नास्ति । तस्याः सन्ततिं पूजय । तदा तव सन्तानः भविष्यति' इति ।

दिलीपः पृष्टवान् - 'शापवाक्यं मया न श्रुतम् । कुतः ?' इति ।

आचार्यः अकथयत् - 'गङ्गाप्रवाहः आसीत् । अतः तत् न श्रुतम्' इति ।

नृपः अपृच्छत् - 'इदानीं किं करोमि ?' इति ।

वसिष्ठः अवदत् - 'आश्रमे नन्दिनी अस्ति । सा कामधेनोः पुत्री । तां पूजय । वन्यजीवनम् आचर । अनुग्रहः भविष्यति' इति ।

नृपः अङ्गीकृतवान् । सः पर्णशालायां वासम् अकरोत् । सुदक्षिणा अपि तत्रैव स्थिता । नृपः राजवैभवम् अत्यजत् । कुशानां शयने सुप्तः । प्रातःकाले धेनुं सुदक्षिणासहितः पूजितवान् । नन्दिनी वनम् अगच्छत् । नृपः ताम् अनुगतवान् । जागरूकः धेनुम् एकविंशतिदिनानि सेवितवान् ।।

## CURSE ON DILIPA

Dilīpa was a king of the Solar dynasty. His son was Raghu. King Raghu was very famous. Hence the dynasty is known as Raghuvamśa. Vaivasvata manu was the first king of the Raghuvamśa.

Dilīpa was affectionate towards his subjects. Sudakṣiṇa was his wife. Dilīpa was without children for a long time. Hence, he was worried. Vasiṣṭha was his preceptor. Dilīpa decided to meet Vasiṣṭha. Hence, he gave the responsibility of his kingdom to his ministers. Together with Sudakṣiṇa he went to the hermitage of Vasiṣṭha. The king expressed his worry before Vasiṣṭha. He asked the question 'Why am I without children?'

Vasiṣṭha thought about the cause. The teacher then said 'O king!

once you had been to heaven. There you served Indra. Then you returned from there. On the way you passed Kāmadhenu. She was in the shade of the Kalpavṛkṣa. You did not see Kāmadhenu. Nor did you salute her. Kāmadhenu became angry. She cursed you. Hence, you have no children. Worship her child. Then you will have children'.

Dilīpa said-'The curse was not heard by me! Why ?'

The preceptor said- 'The roar of the Ganges was too loud. Hence her voice was not heard.'

The king asked- 'What am I to do now?'

Vasiṣtha said 'There is Nandinī in my hermitage. She is Kāmadhenu's daughter. Worship her. Lead the life of an ascetic (forester). You will earn her favour'.

The king accepted this. He lived in a thatched hut. Sudakṣiṇa also lived there itself. The king gave up royal luxuries. He slept on a bed of '*darbha*' grass. In the morning, accompanied by Sudakṣiṇa, he worshipped the cow. Nandinī went into the forest. The king followed her. Remaining vigilant, he served the cow for twenty-one days.

**एतेषाम् उत्तरं लिखत ।**

१. सूर्यवंशः 'रघुवंशः' इति कुतः प्रसिद्धः ?
२. दिलीपस्य आचार्यः कः ?
३. नृपः स्वर्गे कं सेवितवान् ?
४. नन्दिनी का ?
५. दिलीपः कति दिनानि नन्दिनीं सेवितवान् ? **(Answers on PNo - 231)**

## ८. अन्वयक्रमः

In prose, words are arranged in accordance with their meaning. But such an arrangement is not found in a poem. The reason for this is the metre which is in keeping with the words composed. Therefore we must rearrange the words of a stanza while interpreting the meaning. This arrangement of words is called अन्वयक्रम. In understanding the complete sense of a poem these

four steps are followed.

1) पदविभागः = breaking up words. 2) अन्वयः = construing words/ rearranging the words in a sentence form. 3) अन्वयार्थः = meaning arrived at thereby and 4) तात्पर्यम् = the substance.

**1. पदविभागः** - To understand the meaning of each word in Samskrit - be it a noun or a verb - it is absolutely necessary to have the knowledge of the case ending (विभक्तिः), number (वचनम्), person (पुरुषः) of that word. But, in Samskrit poetry (prose also) there occur certain changes due to Sandhi. Therefore, where there are Sandhis the words have to be split up दिलीपस्याचार्यः = दिलीपस्य, आचार्यः । If there are no Sandhis words are written / uttered separately as they are कति दिनानि तिष्ठति = कति, दिनानि, तिष्ठति । This is know as पदविभागः । Remember that पदविभाग is necessary in prose also.

**2. अन्वयः** - When the words are split up we clearly know the case, number, and person of each word. Then these words are arranged in prose order. This is known as अन्वय. Now, the stanza takes a sentence form.

**3. प्रतिपदार्थः** - After construing the words the meaning of each word should be given. This is the अन्वयार्थ/word to word meaning. At this stage you know the meaning of each word in a given verse.

**4. तात्पर्यम्** - After the अन्वयार्थ, the substance of the verse becomes known. तात्पर्यम् consists of giving the total purport of a verse.

Keeping these elements in mind let us try to understand the meaning of slokas.

Selected verses from Mūla Rāmāyaṇa (of Vālmīki) are given below. (In some places descriptive verses are skipped and in some only one half of the original sloka is taken to achieve continuity in narration).

Before commencing the lesson let us read the benedictory verse -

कूजन्तं राम रामेति मधुरं मधुराक्षरम् ।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम् ।।

"Vālmīki is the cuckoo. Perched on the branch of poetry the cuckoo is melodiously cooing the name 'Rāma', 'Rāma'. 'Rāmanāma' itself is very sweet. I bow to that cuckoo in the form of Vālmīki".

इक्ष्वाकुवंशप्रभवो रामो नाम जनैः श्रुतः ।
नियतात्मा महावीर्यो द्युतिमान् धृतिमान् वशी ।।

**पदविभागः** इक्ष्वाकुवंशप्रभवः, रामः, नाम, जनैः, श्रुतः, नियतात्मा, महावीर्यः, द्युतिमान्, धृतिमान्, वशी ।

**अन्वयः** - नियतात्मा, महावीर्यः, द्युतिमान्, धृतिमान्, वशी, इक्ष्वाकुवंशप्रभवः, रामः, नाम, जनैः श्रुतः (आसीत् ।) (The verb 'आसीत्' is not found in the sloka. But it has been supplied to complete the sense. Supplying a word that is not found in the sloka, to complete the sentence, is known as 'अध्याहार' in Samskrit.)

**प्रतिपदार्थः** - रामः नाम = One by name Rāma, नियतात्मा = (who) had his mind restrained, महावीर्यः = who had great prowess, द्युतिमान् = who was radiant, धृतिमान् = who was courageous, वशी = who had controlled his senses, इक्ष्वाकुवंशप्रभवः = (and ) who was born in the dynasty of Ikṣvaku श्रुतः (आसीत्) = was well known, जनैः = among the people.

**तात्पर्यम्** - In the past there was one Rāma of the dynasty of Ikṣvaku. He was renowned among the people. He had extraordinary prowess, was radiant, courageous and had his senses under control.

In this verse the adjective इक्ष्वाकुवंशप्रभवः speaks of the illustrious family of Rāma. Rāma's restraint became evident when he left for the forest following the command of his father. While leaving he showed remarkable self-control by neither blaming Kaikeyī nor Daṣaratha for his own plight. His prowess came to light in the way he slew Vāli, Rāvaṇa and many more rakṣasas. As

the very name suggests, his charming personality was indeed known to everyone. Here the poet uses each adjective with a lot of significance.

## १. अनुवादपद्धतिः

Hereafter, under this heading, the method of simple translation is taught.

Translation is the rendering of thought of one language into another. If you master the art of translating, you should bc ablc to express your ideas properly in the language you are learning. Errors can also be minimised.

Translation is of two types - 1. Translation of the purport (भावानुवादः). 2. Literal translation or word-to-word translation (शब्दानुवादः). The former should be our aim. This requires special equipment. *Bhāvānuvada* can be mastered only when you have command over a language. The key to this lies in employing a flowing style of words of that language, which has its own uniqueness. Literal translation is a stepping stone to it. The latter is advisable in the beginning. But you must remember that this is not our ultimate aim. Even though we give the meaning of every word while translating literally, we will not be expressing the intention of the speaker of the language of the original completely. Therefore our goal should be to express the idea contained in the original clearly in another language. Here are a few examples to show how mere word-to-word translation can result in a grammatically wrong sentence.

Monkey climbs the tree - वानरः वृक्षः आरोहति ।
The boy reads the lesson - बालकः पाठः पठति ।
She crosses the river - सा नदी तरति ।

In these examples the underlined words should have been in द्वितीयाविभक्तिः By translating each word separately without taking the relationship between the words into consideration, the error has cured.

# १०. सन्धिः

Euphonic combinations are introduced under this heading.
Read the following examples.

१. **अत्रैव** अहं पुस्तकं स्थापितवान् ।
२. अहं भवन्तं **कुत्रापि** दृष्टवान् ।
३. अहं कटुवचनं **नेच्छामि** ।
४. अद्यतनः कार्यक्रमः **अत्युत्तमः** आसीत् ।
५. तौ सहोदरौ **रामलक्ष्मणाविव** स्तः ।

In the above examples observe the words in bold type - अत्रैव, कुत्रापि, नेच्छामि, अत्युत्तमः, रामलक्ष्मणाविव ।

All these are constituted of two words - अत्र + एव, कुत्र + अपि, न + इच्छामि, अति + उत्तमः, रामलक्ष्मणौ + इव

Note that the last letter of the first word and first letter of the second word are joined to result in a different syllable. Such combinations of letters resulting in a new syllable, are called Sandhis.

The Letters are divided into two types - (i) Vowels and (ii) Consonants. The combination of vowels is called स्वरसन्धिः and combination of a vowel and a consonant or a consonant and another consonant is called व्यञ्जनसन्धिः । A combination where a विसर्ग is involved is called विसर्गसन्धिः । In this way euphonic combinations are of three types स्वरसन्धिः, व्यञ्जनसन्धिः and विसर्गसन्धिः ।

It was said earlier that when a vowel at the end of a word joins with another vowel at the beginning of the succeeding word resulting in a new letter, it is called स्वरसन्धिः।

Let us study the examples given above from this angle.

कुत्रापि = कुत्र + अपि - कुत्र् + **अ** + **अ** + पि - कुत्रापि
अ + अ = आ

नेच्छामि = न + इच्छामि - न् + **अ** + **इ** + च्छामि - नेच्छामि
अ + इ = ए

अत्युत्तमम् = अति + उत्तमम् - अत् + **इ** + **उ** + त्तमम् - अत्युत्तमम्
इ + उ = यु

रामलक्ष्मणाविव = रामलक्ष्मणौ + इव -

रामलक्ष्मण् + **औ** + **इ** + व - रामलक्ष्मणाविव ।
औ + इ = आवि

In all these four examples the change occurs due to the combination of two vowels. So they are examples of स्वरसन्धिः.

**स्वरसन्धिः**

१. सवर्णदीर्घसन्धिः २. गुणसन्धिः
३. वृद्धिसन्धिः ४. यण्सन्धिः
५. यान्तवान्तादेशसन्धिः ६. पूर्वरूपसन्धिः

Detailed explanation of these will be given in the following lessons.

## ११. सङ्ग्राह्यविषयाः

**Famous Pairs**

रात्रिः-दिवा, स्वर्गः-नरकः, पुण्यम्-पापम्, सुखम्-दुःखम्,
धर्मः-अधर्मः, प्रकृतिः-पुरुषः, ज्ञानम्-अज्ञानम्

**Famous trios**

लोकत्रयम् - स्वर्गः, मर्त्यः, पातालः
प्रस्थानत्रयम् - उपनिषत्, ब्रह्मसूत्राणि, भगवद्गीता
त्रिवेणी - गङ्गा. यमुना, सरस्वती
त्रिवर्गपुरुषार्थाः - धर्मः, अर्थः, कामः
दोषत्रयम् - वातः, पित्तम्, कफः
त्रिपिटकानि - सूत्रपिटकम्, विनयपिटकम् अभिधर्मपिटकम्
त्रिमूर्तयः - ब्रह्मा, विष्णुः, महेश्वरः
रत्नत्रयम् - सम्यक् ज्ञानम्, सम्यक् चारित्र्यम्, सम्यग्दर्शनम्
शक्तित्रयम् - ज्ञानशक्तिः, इच्छाशक्तिः, क्रियाशक्तिः

**Tradition**

**To be recited while taking पञ्चगव्यम्**

यत् त्वगस्थिगतं पापं देहे तिष्ठति मामके ।
प्राशनं पञ्चगव्यस्य दहत्यग्निरिवेन्धनम् ।।

Taking पञ्चगव्यम् is going to burn the sin accumulated in the skin and bones in my body, just like fire burning fuel.

# परिचयः - प्रथमः पाठः

## प्रश्नाः

I. Translate the following sentences.

1. There are many thorns on the way.
2. The helpless poor make a living with difficulty.
3. Two well-built young men are going on the road.
4. Two tall trees are there in the garden.
5. Recite two beautiful slokas.

II. Write the पदविभाग of the following sloka.

छायामन्यस्य कुर्वन्ति
तिष्ठन्ति स्वयमातपे ।
फलान्यपि परार्थाय
वृक्षाः सत्पुरुषा इव ॥

III. Answer the following questions.

1. What is a 'विशेषणम्' ?
2. Which three are common to विशेषणम् and विशेष्यम् ?
3. What is the विभक्ति in अहम् ? What was the bridegroom's answer for this question ?
4. To whom will every one become a servant ?
5. How many types of sandhis are there ? What is स्वरसन्धि ?

(**Note:** Answers for the above exercises are given in the end of this book. **(PNo - 231)** After completing the exercises check your answers.)

# परिचयः - द्वितीयः पाठः

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।।
Laziness is, indeed, a great enemy residing in the body of men.

## १. भाषाभ्यासः

## विशेष्य-विशेषणभावः - २

**I.** Study the following sentences.

१. **विनयशीलं छात्रं** सर्वे इच्छन्ति ।
२. उद्याने **उन्नताः वृक्षाः** सन्ति ।
३. शुकाः **मधुराणि फलानि** खादन्ति ।
४. नार्यः **लघुना कन्दुकेन** क्रीडन्ति ।
५. बालिका **दीर्घया लेखन्या** लिखति ।
६. सर्वे **नूतनैः पुष्पैः** अर्चन्ति ।
७. अध्यापकाः **उत्तीर्णेभ्यः छात्रेभ्यः** प्रशस्तिपत्रं प्रयच्छन्ति ।
८. जनाः नद्यां **मलिनानि वस्त्राणि** क्षालयन्ति ।
९. सर्वे **कठिनात् आतपात्** ताम्यन्ति ।
१०. **उन्नतात् वृक्षात्** फलानि पतन्ति ।
११. **विशाले क्रीडाङ्गणे** सर्वे क्रीडन्ति ।
१२. **सर्वेषु स्थलेषु** देवः अस्ति ।
१३. **सकलस्य प्रपञ्चस्य** सृष्टिकर्ता परमात्मा ।

१४. **सुदूरात् नगरात्** बान्धवाः आगच्छन्ति ।
१५. **भयङ्करे अरण्ये** सिंहः गर्जति ।
१६. शिक्षकः **चतुरेभ्यः छात्रेभ्यः** उपायनं ददाति ।
१७. युद्धे **धीराः योधाः** युद्ध्यन्ते ।
१८. माता **उत्तमेन शाकेन** पाकं करोति ।
१९. **दीर्घा लता** वृक्षम् आलम्ब्य वर्धते ।
२०. **महत्यां गुहायां** सिंहः वसति ।

In the above sentences, छात्रं (द्वि.वि.), वृक्षाः (प्र.वि.) कन्दुकेन (तृ.वि.) etc., are substantives (विशेष्याणि). They are in different cases. Similarly the adjectives विनयशीलम् (द्वि.वि.), उन्नताः (प्र.वि.), लघुना (तृ.वि.) are in the same case as the substantives . You have learnt in the first lesson that the Adjective (विशेषणम्) follows the Substantive (विशेष्यम्) in gender and number.

Summing up, the rule can be stated as - "Adjectives should be in the same gender, number and case as the noun they qualify."

**II.** Read the following sentences.

१. तत्र **एकः** बालकः क्रीडति ।
२. **एका** बालिका विद्यालयं गच्छति ।
३. **एकं** फलं नष्टम् अस्ति ।
४. **त्रयः** चोराः मार्गे धावन्ति ।
५. **तिस्रः** महिलाः विपणिं गतवत्यः ।
६. सभाभवने **त्रीणि** चित्राणि सन्ति ।
७. विद्यालये **चत्वारः** अध्यापकाः पाठयन्ति ।
८. अद्य **चतस्रः** विद्यार्थिन्यः कक्ष्यां न आगताः ।
९. **चत्वारि** फलानि वृक्षात् पतितानि ।
१०. **द्वौ** बालकौ भाषणं कृतवन्तौ ।
११. **द्वे** बालिके गीतं गीतवत्यौ ।
१२. मह्यं **द्वे** पत्रे आगते । (I have received two letters.)

In the above sentences the underlined words are numerals.

Note that they also behave like adjectives ie., they follow the **विशेष्यम्** in number and gender. In Samskrit numerals are also **विशेषण**-s.

The numerals are -

| पुं. | एकः | द्वौ | त्रयः | चत्वारः |
|---|---|---|---|---|
| स्त्री. | एका | द्वे | तिस्रः | चतस्रः |
| नपुं. | एकम् | द्वे | त्रीणि | चत्वारि |

**III.** Observe the adjectives and nouns in the following sentences.

१. कर्मकरः उद्याने **एकं वृक्षं** कर्तितवान् ।
२. व्याधः **एकेन बाणेन** पक्षिणं मारितवान् ।
३. ग्रामे **एकस्मिन् गृहे** वेदपाठः प्रचलति ।
४. कार्यक्रमे **एकया बालिकया** गीतं गीयते ।
५. **एकस्यां कपाटिकायां** केवलं क्रीडनकानि सन्ति ।
६. प्रधानमन्त्री **त्रिभिः जनैः** सह वार्तालापं कृतवान् ।
७. **त्रयाणां पुस्तकानां** नामानि सः सम्यक् ज्ञातवान् ।
८. नगरे **त्रिषु स्थलेषु** कोलाहलः प्रवृत्तः ।
९. कण्डोले **चत्वारि फलानि** उत्तमानि सन्ति ।
१०. **चतुरः बालकान्** माता आहूतवती ।
११. कार्यक्रमे **चतस्रः भगिन्यः** सम्यक् कार्यं कृतवत्यः ।
१२. वने **चतसृभिः धेनुभिः** सह वत्सः चरति ।
१३. **द्वयोः वृक्षयोः** औन्नत्यं पश्य ।
१४. **द्वे बालिके** विद्यालये सम्यक् पठतः ।
१५. **द्वौ बालकौ** वेगेन धावतः ।

The words in bold type above are numerals / संख्यावाचकाः । Note that they behave like adjectives/**विशेषणानि** ie., they are in the same gender and number as the substantive. So, you now know that numerals are also adjectives in Samskrit.

**IV.** Observe these sentences.

पञ्च बालकाः पठन्ति । षट् छात्राः गच्छन्ति ।
पञ्च बालिकाः पठन्ति । षट् बालिकाः धावन्ति ।

पञ्च फलानि सन्ति । षट् पुस्तकानि सन्ति ।

पञ्च and षट् are used here. It is obvious that they do not change according to the gender of the विशेष्यम् । Actually these numerals पञ्च, षट्, सप्त etc. have the same form in all the three genders.

| एकं, द्वे, त्रीणि, चत्वारि - These differ in the three genders. | पञ्च, षट्, सप्त etc., are the same in all three genders. |
|---|---|

V. Read the following sentences that conform to the above rule.

१. नगरे **षट् मन्दिराणि** सन्ति ।
२. **दशसु प्रकोष्ठेषु** जनाः वसन्ति ।
३. **दशसु कथासु** एका अत्युत्तमा अस्ति ।
४. सः **षड्भिः मित्रैः** सह गतवान् ।
५. सा **षड्भिः सखीभिः** सह छात्रावासे निवसति ।
६. **सप्तभिः रूप्यकैः** अहम् एतां लेखनीं क्रीतवान् ।
७. **सप्तानां मालानां** विक्रयणेन सः प्रभूतं धनं सम्पादितवान् ।
८. अष्टाक्षरीमन्त्रः **अष्टभिः अक्षरैः** युक्तः अस्ति ।
९. आ **पञ्चभ्यः वर्षेभ्यः** सः संस्कृतसेवां करोति ।
१०. भिक्षुकः **पञ्चभ्यः गृहेभ्यः** भिक्षां प्राप्तवान् ।

## अभ्यासः

I. Fill in the blanks with the appropriate froms of विशेषण-s according to the gender, number and case of the विशेष्य-s.

| i. उत्तमः | ii. चतुरः |
|---|---|
| १. ........ बालकम् | १. ........ बालकान् |
| २. ........ बालकेन | २. ........ बालिकाः |
| ३. ........ बालकाय | ३. ........ बालकैः |
| ४. ........ बालकात् | ४. ........ बालिकाभिः |
| ५. ........ बालकस्य | ५. ........ बालकेभ्यः |

| | |
|---|---|
| ६. ........ बालके | ६. ........ बालिकाभ्यः |
| ७. ........ बालिकया | ७. ........ बालकानाम् |
| ८. ........ बालिकायै | ८. ........ बालिकानाम् |
| ९. ........ बालिकायाः | ९. ........ बालकेषु |
| १०. ........ बालिकायाम् | १०. ........ बालिकासु |

**II.** Match the words in the two columns.

| अ | आ |
|---|---|
| १. उन्नतात् | १. वृक्षे |
| २. उन्नते | २. गुहायाम् |
| ३. नूतनैः | ३. वस्त्राणि |
| ४. विशालायां | ४. दण्डेन |
| ५. मलिनानि | ५. विद्यार्थिन्याः |
| ६. उदारस्य | ६. लेखन्या |
| ७. दीर्घेण | ७. वृक्षात् |
| ८. उत्तमया | ८. वस्त्रैः |
| ९. बुद्धिमत्याः | ९. बालिकायै |
| १०. चतुरायै | १०. जनस्य |

**III.** According to the विशेष्य, fill in the suitable form of the विशेषण given in brackets.

उदा - उन्नतात् वृक्षात् फलानि पतितानि । (उन्नत)

१. ........ प्रपञ्चे देवः अस्ति । (समग्रः)
२. बालकः ........ फलानि खादितुम् इच्छति । (पक्व)
३. ........ छुरिकया कर्तनसमये जागरूकः भव । (तीक्ष्णा)
४. तस्याः गृहम् ..... उपकरणैः अलङ्कृतम् अस्ति । (आधुनिक)
५. राधिका ........ सखीः गृहं प्रति आहूतवती । (आत्मीय)
६. ........ बालिकायाः पिता सुरेशः । (बुद्धिमती)
७. ........ छात्रेभ्यः विशेषशिक्षणं प्रदत्तम् । (चतुर)

८. अधिकारी ........ जनेभ्यः उत्कोचं स्वीकृतवान् । (निर्धन)
९. ........ राष्ट्रेषु भारतम् अन्यतमम् अस्ति । (अभिवृद्धिशील)
१०. ........ भक्ताय देवः वरं ददाति । (सरल)

**IV.** Fill in the blanks with the suitable forms of the numeral indicated in brackets.

उदा - (१) <u>एका</u> बालिका ।

१. (३) ...... मालाभिः   २. (२) ...... शिक्षकयोः
३. (४) ...... पुस्तकानाम्   ४. (५) ...... देवीभ्यः
५. (८) ...... प्रकोष्ठेषु   ६. (७) ...... आसन्दैः
७. (९) ...... पत्रिकाभ्यः   ८. (१) ...... मित्रेण
९. (६) ...... शाखासु   १०. (१०) ...... गृहेभ्यः

**V.** Fill in the blanks with the suitable form of the numeral in brackets.

उदा - (१) <u>एकां</u> बालिकाम् आह्वयतु ।

१. ते (३) ...... शिक्षकान् प्रेषितवन्तः ।
२. (४) ...... मार्गदर्शिन्यः गच्छन्ति ।
३. (६) ...... कक्ष्यासु पाठः प्रचलति ।
४. उत्तीर्णानां (१०) ...... बालानां नामानि वद ।
५. (२) ...... बालाभ्यां सह माता गतवती ।
६. (३) ...... वर्णैः आकाशः शोभते ।
७. सः (८) ...... भाषाः जानाति ।
८. गुरुः (१) ...... शिष्याय मन्त्रदीक्षां दत्तवान् ।
९. (५) ...... पाण्डवेषु धर्मराजः ज्येष्ठः ।
१०. (८) ...... शिलाभिः उद्यानं शोभते । **(Answers on PNo - 232)**

## २. व्यावहारिकशब्दावली

### Tastes and colours

**Tastes**

तिक्तः - Bitter   कटुः - Pungent, hot   मधुरः - Sweet

लवणः - Salty कषायः - Astringent आम्लः - Sour

**Colours**

श्वेतः - White कृष्णः - Black नीलः - Blue

पीतः - Yellow रक्तः - Red पाटलः - Pink

हरितः - Green धूम्रः - Grey काषायवर्णः - Saffron

नीललोहितः - Purple कपिशः - Brown

शबलः - Spotted / variegated colour/ multi-coloured

## ३. चाटुश्लोकः

Children may quarrel and take their complaint to the mother. This is a familiar sight in every home. Below Gaṇapati and Ṣaṇmukha - the sons of Pārvati are engaged in a quarrel. Gaṇapati is weeping. Pārvati asks what the matter is ? Her sons tell her how the fight ensued.

'हे हेरम्ब ! किमम्ब ! रोदिषि कुतः ? कर्णौ लुठत्यग्निभूः
किन्ते स्कन्द विचेष्टितं, मम पुरा सङ्ख्या कृता चक्षुषाम् ।
नैतत्तेऽप्युचितं गजास्य ! चरितं, नासां मिमीतेऽम्ब मे
तावेवं सहसा विलोक्य हसितव्यग्रा शिवा पातु वः ।।'

Pārvati - O Gaṇapati !

Gaṇapati - Well, mother !

Pārvati - Why are you weeping ?

Gaṇapati - Ṣhaṇmukha (अग्निभूः) is twisting my ears.

Pārvati - O Skanda ! What were you up to ?

Ṣhaṇmukha - He first prodded at my eyes.

Pārvati - Gaṇapati ! You were naughty.

Gaṇapati - Mother ! he measured the length of my trunk.

Thus the complaints went on.

May that Pārvati, who is joyfully engaged in watching the two sons fighting thus, protect you.

## ४. समस्या

In certain enigmatic verses, there is an apparent contradiction in meaning. But when the words are carefully separated, the riddle is solved. One such enigmatic verse is given below. Try to solve this puzzle.

तातेन कथितं पुत्र ! लेखं लिख ममाज्ञया ।
न तेन लिखितो लेखः पितुराज्ञा न लोपिता ।।

"A father asked his son to write a letter according to his directions. Neither he wrote the letter nor did he disobey the father."

This is the apparent meaning. There is a contradiction here. Try to solve it by rearranging the words in the stanza.

(Answer on the PNO - 41)

## ५. सुभाषितम्

अङ्गं गलितं पलितं मुण्डं दशनविहीनं जातं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं तदपि न मुञ्चत्याशापिण्डम् ।।३।।

**पदविभागः -** अङ्गम्, गलितम्, पलितम्, मुण्डम्, दशनविहीनम्, जातम्, तुण्डम्, वृद्धः, याति, गृहीत्वा, दण्डम्, तत्, अपि, न, मुञ्चति, आशापिण्डम्

**प्रतिपदार्थः -** अङ्गम् - The Limb, गलितम् - is worn out. मुण्डम् - The head, पलितम् - has grey hair. तुण्डम् - The mouth, दशनविहीनं जातम् - has no teeth in it. वृद्धः - The old man, दण्डं गृहीत्वा याति - goes holding a staff. तदपि - But still, न मुञ्चति - he doesnot leave, आशापिण्डम् - the tie of desire (attachment).

**तात्पर्यम् -** The limbs have lost their strength. Hair has turned grey. Teeth are gone and the oldman is walking with a stick. Yet he does not give up his desires.

धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत् ।
सन्निमित्ते वरं त्यागो विनाशे नियते सति ।।४।।

**पदविभागः** - धनानि, जीवितम्, च, एव, परार्थे, प्राज्ञः, उत्सृजेत् । सन्निमित्ते, वरम्, त्यागः, विनाशे, नियते, सति ।

**प्रतिपदार्थः** - प्राज्ञः - A wise man, उत्सृजेत् - must give up, धनानि - wealth, जीवितं चैव - and also his life, परार्थे - for the sake of others. विनाशे नियते सति - When destruction is sure to come, सन्निमित्ते - for a good cause, त्यागः - sacrificing (money and life), वरम् - is better.

**Note** : While writing the word-to-word meaning in English the अन्वयक्रम/prose order of Samskrit words cannot be maintained. So, you should write the अन्वय separately in the order of कर्तृ, कर्म and क्रिया with adjectives(विशेषणानि), if any, preceding the respective nouns qualified (विशेष्याणि) and then write the meaning in English separately. For this reason only, we have used the term प्रतिपदार्थ instead of अन्वयार्थ in English lessons. For your easy understanding we have, however, given the word to word meaning in English also. But the order of the Samskrit words there is not the अन्वयक्रम ।

The अन्वय of the above sloka is as follows. For the verses in the coming lessons try to write the अन्वय yourself on the same lines.

अन्वयः - प्राज्ञः धनानि जीवितं चैव परार्थे उत्सृजेत् ।
विनाशे नियते सति, सन्निमित्ते त्यागः वरम् ।

**तात्पर्यम्** - A wise man must sacrifice his wealth and life for others. Because sacrifice for a good cause is always better since wealth and life are known to be transient in nature.

## ६. पदसङ्ग्रहः

**खाद्** - to eat

१. खादति २. खाद्यते ३. खादिष्यति
४. खादितव्यम् - खादनीयम् ५. खादितः - खादिता - खादितम्
६. खादितवान् - खादितवती ७. खादन् - खादन्ती ८. खादित्वा - सङ्खाद्य ९. खादितुम् ।

**हृ** - to take away

१. हरति २. ह्रियते ३. हरिष्यति
४. हर्तव्यम् - हरणीयम् ५. हृतः - हृता - हृतम् ६. हृतवान् - हृतवती
७. हरन् - हरन्ती ८. हृत्वा - परिहृत्य (having solved/avoided)
९. हर्तुम् ।

**निन्द्** - to blame / abuse

१. निन्दति २. निन्द्यते ३. निन्दिष्यति
४. निन्दितव्यम् - निन्दनीयम् ५. निन्दितः - निन्दिता - निन्दितम्
६. निन्दितवान् - निन्दितवती ७. निन्दन् - निन्दन्ती ८. निन्दित्वा - संनिन्द्य ९. निन्दितुम् ।

**नी** - to lead, to take along

१. नयति २. नीयते ३. नेष्यति
४. नेतव्यम् - नयनीयम् ५. नीतः - नीता - नीतम् ६. नीतवान् - नीतवती ७. नयन् - नयन्ती ८. नीत्वा - प्रणीय (having composed)
९. नेतुम् ।

**क्रीड्** - to play

१. क्रीडति २. क्रीड्यते ३. क्रीडिष्यति
४. क्रीडितव्यम् - क्रीडनीयम् ५. क्रीडितः - क्रीडिता - क्रीडितम्
६. क्रीडितवान् - क्रीडितवती ७. क्रीडन् - क्रीडन्ती ८. क्रीडित्वा - सङ्क्रीड्य ९. क्रीडितुम् ।

**दृश्** - to see

१. पश्यति २. दृश्यते ३. द्रक्ष्यति
४. द्रष्टव्यम् - दर्शनीयम् ५. दृष्टः - दृष्टा - दृष्टम् ६. दृष्टवान् - दृष्टवती ७. पश्यन् - पश्यन्ती ८. दृष्ट्वा - सन्दृश्य ९. द्रष्टुम् ।

**पा** - to drink

१. पिबति २. पीयते ३. पास्यति
४. पातव्यम् - पानीयम् ५. पीतः - पीता - पीतम् ६. पीतवान् - पीतवती
७. पिबन् - पिबन्ती ८. पीत्वा - आपीय (having drunk completely)
९. पातुम् ।

मम आचार्यः वसिष्ठः । तस्य धेनुः एव धनम् । अतः प्रार्थनां करोमि । मम देहं खाद, धेनुं त्यज'' इति अवदत् ।

सिंहः किञ्चित् अहसत् । ''त्वं जगत्प्रभुः । नूतनं वयः । सुन्दरं शरीरम् । इदं सर्वम् अल्पस्य कारणेन त्यजसि किम् ? त्वं विचारमूढः'' इति अकथयत् ।

## Dialogue between the Lion and Dilīpa

Another day Nandinī tested the King. She entered a cave of the Himālayas. Dilīpa was watching the beauty of the mountain. Then a lion forcibly caught Nandinī. Being tormented by the lion the cow cried aloud. The King heard the cry. He saw the cow. The lion was dragging the cow along. Dilīpa became angry. He decided to kill the lion. He put his hand in the quiver to take out an arrow from it. But his hand was paralysed thereby itself. The king was insulted. His anger too increased.

Then the lion said to the king-"O king ! do not exert yourself. All your missiles and weapons are of no avail. I am a servant of Śiva. My name is Kumbhodara. Do you see the Devadaru tree nearby ? Pārvati has nourished that tree with affection. Pārvati has employed me for the protection of that tree. Whatever animal comes here is my prey. Hence, I am not leaving this cow".

On hearing these words the king said- "I am also a worshipper of Śiva. He is worthy of respect. Vasiṣtha is my teacher. This cow is his wealth. Hence, I am requesting you, eat my body and leave the cow".

The lion laughed a little and said- "You are the lord of the world. You are young in age. You have a handsome body. Would you give up all this for the sake of this insignificant thing ? You are irrational".

**एतेषाम् उत्तरं लिखत ।**

१. धेनुः किमर्थं क्रन्दनं कृतवती ?
२. नृपस्य अपमाननं किमर्थं सञ्जातम् ?
३. कुम्भोदरः कस्य रक्षणं करोति ?

४. कुम्भोदरस्य आहारः कः ?
५. आचार्यस्य वसिष्ठस्य धनं किम् ?

## ८. अन्वयक्रमः

तमेवंगुणसम्पन्नं रामं सत्यपराक्रमम् ।
यौवराज्येन संयोक्तुमैच्छत् प्रीत्या महीपतिः ।।

**पदविभागः** - एवंगुणसम्पन्नम्, रामम्, सत्यपराक्रमम्, यौवराज्येन, संयोक्तुम्, ऐच्छत्, प्रीत्या, महीपतिः ।

**अन्वयः** - महीपतिः एवंगुणसम्पन्नं सत्यपराक्रमं तं रामं यौवराज्येन संयोक्तुं प्रीत्या ऐच्छत् ।

**प्रतिपदार्थः** - महीपतिः - King Daśaratha, प्रीत्या - delightfully, ऐच्छत् - desired, तं रामं यौवराज्येन संयोक्तुम् - to make that Rāma the crown prince, एवंगुणसम्पन्नम् - (Rāma who was) endowed with the qualities mentioned earlier, सत्यपराक्रमम् - (and also) was one of unfailing valour.

**तात्पर्यम्** - As described earlier Rāma was possessed of many a good quality. Never once did his valour go fruitless. Daśaratha was desirous of making such a son of his the crown prince. Indeed it was a joyous occasion for the father.

The person who ascends the throne after the king, is called 'युवराज' । Just like the crowning ceremony of the king the coronation of the prince is celebrated according to the prescribed rites. पट्ट means throne. During पट्टाभिषेक the king or prince is bathed in holy water brought from various sacred rivers. The royal astrologers fix up an auspicious day and time (*muhurta*) for the occasion that is celebrated with great pomp.

तस्याभिषेकसम्भारान् दृष्ट्वा भार्याथ कैकयी ।
पूर्वं दत्तवरा देवी वरमेनमयाचत ।।
विवासनं च रामस्य भरतस्याभिषेचनम् ।

**पदविभागः** - तस्य, अभिषेकसम्भारान्, दृष्ट्वा, भार्या, अथ, कैकयी,

पूर्वम्, दत्तवरा, देवी, वरम्, एनम्, अयाचत, विवासनं, च, रामस्य, भरतस्य, अभिषेचनम् ।

**अन्वयः** - अथ तस्य अभिषेकसम्भारान् दृष्ट्वा पूर्वं दत्तवरा भार्या देवी कैकयी रामस्य विवासनं भरतस्य अभिषेचनं च (इति) वरम् एनम् अयाचत ।

**प्रतिपदार्थः** - अथ - Then, दृष्ट्वा - on seeing, तस्य अभिषेकसम्भारान् - the requisites for his crowning ceremony, देवी कैकयी - queen Kaikeyi, पूर्वं दत्तवरा - who had been granted a boon earlier, अयाचत - asked, एनम् - (him) Daśaratha, वरं - the boon (of), रामस्य विवासनम् - sending Rāma away to the forest च - and, भरतस्य अभिषेचनम् - crowning Bharata.

**तात्पर्यम्** - Preparations were on for the crowning ceremony of Rāma. Watching this Kaikeyi was agitated and was not able to bear the thought of Rāma becoming the Yuvarāja. She demanded the two boons Daśaratha had granted her earlier. The first one was to send Rāma on exile to the forest and the second was that Bharatha had to be crowned in his stead.

During a war with Timidhvaja on an earlier occasion, Daśaratha lost consciousness. Kaikeyi who had accompanied him then, took him away to a safe place and saved his life. Pleased by this gesture of hers he promised her two boons, which, she said she would ask later when needed. Now, when Rāma was to be crowned, she felt jealons that her son was not ascending the throne. So, she asked that Rāma be sent away to the forest for fourteen years and Bharatha be made the crown prince.

## १. अनुवादपद्धतिः

In the previous lesson you were told to stick to word for word translation during the initial stages of learning a new language. While thus translating you have to carefully ascertain the correct meaning of each word. Then the words have to be arranged according to their meanings.

Now read the following sentences.

| | | |
|---|---|---|
| सः आगतवान् आसीत् । | = | He had come. |
| सा आगतवती आसीत् । | = | She had come. |
| लेखनी पतिता आसीत् । | = | The pen had fallen. |
| अहम् आगतवान् आसम् । | = | I had come. |
| सः आगतवान् अस्ति । | = | He has come. |
| सा आगतवती अस्ति । | = | She has come. |
| सः आगतवान् स्यात् । | = | He might have come. |
| सा आगतवती स्यात् । | = | She might have come. |
| लेखनी पतिता स्यात् । | = | The pen might have fallen. |

In the above sentences the verbal forms आसीत्, अस्ति, स्यात् etc., are used along with past participles. Translate the following sentences and do some more similar exercises.

I. Translate the following into English.

१. सखी मिलितवती आसीत् ।
२. ह्यः दृष्टवान् आसम् ।
३. रामः लिखितवान् आसीत् ।
४. त्वं श्रुतवान् आसीः वा ?
५. अहं प्रेषितवान् अस्मि ।
६. करवस्त्रं पतितम् अस्ति ।
७. सः निद्रां न कृतवान् स्यात् ।

(सखी - Friend(fem), ह्यः - Yesterday, न कृतवान् स्यात् - might not have done)

II. Translate the following sentences into Samskrit.

1. He had written a letter.
2. Had you come ?
3. I had read.
4. Sita has kept the book.
5. I have written a letter to the teacher.
6. He might have gone.

7. Could he have seen ? (स्यात् वा ?)
8. Could you have kept it at home ? (स्याः वा ?)
9. He might have had his meals.
10. She might not have washed the clothes.

**(Answers on PNo - 232)**

## १०. सन्धिः

In the previous lesson we have come to know about स्वरसन्धि. Let us now study सवर्णदीर्घसन्धि, one of the Svarasandhis in detail.

### I. सवर्णदीर्घसन्धिः

Carefully read the following sentences-

१. विष्णुः **दैत्यारिः** इति प्रसिद्धः ।
२. बालकः **विद्यालयं** गच्छति ।
३. **गच्छामीति** सः उक्तवान् ।
४. शिवः **पार्वतीशः** इति उच्यते ।
५. **गुरूपदेशः** श्रद्धया श्रोतव्यः ।
६. **वधूर्मिका** उत्तमा अस्ति । (ऊर्मिका - ring)
७. **पितॄणस्य** प्रत्यर्पणे पुत्रः क्लेशम् अनुभवति ।

The words in bold type above are made up of two words. The last letter of the first word and first letter of the second word is a vowel and they are letters of the same kind (सवर्णौ).

Let us see which vowels have joined in these examples.

१. दैत्य + अरिः = दैत्यारिः (अ + अ = आ)
२. विद्या + आलयः = विद्यालयः (आ + आ = आ)
३. गच्छामि + इति = गच्छामीति (इ + इ = ई)
४. पार्वती + ईशः = पार्वतीशः (ई + ई = ई)
५. गुरु + उपदेशः = गुरूपदेशः (उ + उ = ऊ)
६. वधू + ऊर्मिका = वधूर्मिका (ऊ + ऊ = ऊ)
७. पितृ + ऋणम् = पितॄणम् (ऋ + ऋ = ॠ)

In this way if अ, इ, उ, ऋ - (either short vowel or long vowels)

are followed by the same (short or long) vowel, in the place of the two vowels a long vowel of the same kind is substituted. This is called सवर्णदीर्घसन्धिः । Observe this change in the above examples.

## अभ्यासः

**I.** Split the following words and point out the combination of vowels in it as shown in the example.

उदा - चापि = च + अपि (अ + अ = आ)
१. तापसाश्रमः = तापस + आश्रमः (.... + .... = ....)
२. तदापि = तदा + अपि (.... + .... = ....)
३. गिरीशः = गिरि + ईशः (.... + .... = ....)
४. अस्तीति = अस्ति + इति (.... + .... = ....)
५. साध्वीयम् = साध्वी + इयम् (.... + .... = ....)
६. पार्वतीव = पार्वती + इव (.... + .... = ....)
७. गुरूक्तिः = गुरु + उक्तिः (.... + .... = ....)
८. भानूदयः = भानु + उदयः (.... + .... = ....)
९. गच्छामीव = गच्छामि + इव (.... + .... = ....)
१०. वाणीशः = वाणी + ईशः (.... + .... = ....)

**II.** Split the following words and point out the letters joined as shown in the example.

उदा - कार्यालयः = कार्य + आलयः (अ + आ = आ)
१. गजाननः = ........ + ........ (.... + .... = ....)
२. गिरीन्द्रः = ........ + ........ (.... + .... = ....)
३. नातीतम् = ........ + ........ (.... + .... = ....)
४. वधूक्तिः = ........ + ........ (.... + .... = ....)
५. वाणीयम् = ........ + ........ (.... + .... = ....)
६. भवतूत्साहः = ........ + ........ (.... + .... = ....)
७. एवायम् = ........ + ........ (.... + .... = ....)
८. फणीन्द्रः = ........ + ........ (.... + .... = ....)
९. कटूक्तिः = ........ + ........ (.... + .... = ....)
१०. सुखासनम् = ........ + ........ (.... + .... = ....)

**III.** Join the following words.

उदा - मठ + अधीशः = <u>मठाधीशः</u>

१. विद्या + अधिपः  २. का + अपि  ३. सुधा + अर्णवः
४. पुष्प + अर्चनम्  ५. महती + इच्छा  ६. नदी + इह
७. कवि + ईश्वरः  ८. सिन्धु + उदकम्  ९. पटु + उपायः
१०. ननु + उन्नतः **(Answers on PNo - 232)**

## ११. सङ्ख्याविषयाः

**Famous fours**

आश्रमचतुष्टयम् - ब्रह्मचर्यम्, गृहस्थः, वानप्रस्थः, संन्यासः ।
चतुरङ्गानि - रथः, गजः, अश्वः, पदातिः ।
चतुरुपायाः - साम, दानम्, भेदः, दण्डः ।
चतुर्गतयः - देवः, मनुष्यः, तिर्यक्, नारकः ।
चतुर्वेदाः - ऋग्वेदः, यजुर्वेदः, सामवेदः, अथर्ववेदः ।
चतुर्वर्गाः - धर्मः, अर्थः, कामः, मोक्षः ।

**Tradition**

शतायुर्वज्रदेहाय सर्वसम्पत्कराय च ।
सर्वारिष्टविनाशाय निम्बकन्दलभक्षणम् ।।

This sloka is to be recited when eating a mixture of neem and jaggery on the day of Yugādi.

The tender shoot of neem is to be eaten for a strong body with a hundred year's life, to obtain all kinds of wealth and to ward off all evil.

**Answer to the Riddle**

Answer can be obtained by rearranging the words in the verse. Read the words न तेन as one word. नतेन means 'with humility'/ 'with his head bowed down'. Since he wrote the letter obediently the father's command was not disobeyed by him.

# परिचयः - द्वितीयः पाठः

## प्रश्नाः

I. Correct the errors in the विशेषण-s and rewrite the following sentences.

१. उन्नतासु वृक्षेषु पक्षिणः वसन्ति ।
२. त्रयः महिलाः सम्भाषणं कुर्वन्ति ।
३. सर्वाभ्यः बालकेभ्यः फलं देहि ।
४. प्राचीने नगर्यां जनाः वरान्ति ।
५. चत्वारः विद्यार्थिन्यः प्रथमश्रेणीं प्राप्तवत्यः ।

II. Say whether the following statements are correct or incorrect.

1. Numerals are also adjectives in Samskrit.
2. The forms of पञ्च, षट् etc., change according to gender.
3. चतस्रः बालकाः is correct.
4. विशेषणम् does not follow the विभक्ति of the विशेष्यम् ।
5. सवर्णदीर्घसन्धि is a type of स्वरसन्धि ।

III Answer the following questions.

1. Which numeral forms change according to gender ?
2. How do you get the answer for the puzzle from the words 'न तेन' ?
3. Who does not give up desire ?
4. What is meant by एकादेशः ?

---

**उत्तराणि**

I. १. उन्नतेषु वृक्षेषु । २. तिस्रः महिलाः । ३. सर्वेभ्यः बालकेभ्यः । ४. प्राचीनायां नगर्याम् । ५. चतस्रः विद्यार्थिन्यः ।

II. 1.Correct 2. Incorrect 3. Incorrect 4. Incorrect 5. Correct

III. 1. एकं, द्वे, त्रीणि, चत्वारि change in form according to the gender of the noun. 2. 'नतेन' is to be taken as one word. 3. An oldman with grey hair, teeth gone and walking with a stick does not still give up desire. 4. When two letters are replaced by a single letter in a सन्धि it is known as एकादेशः ।

# परिचयः - तृतीयः पाठः

''नियतो यत्र धर्मो वै तमशङ्कः समाचर'' - *महाभारतम्*
Where 'Dharma' is clear, practise it without hesitation.

## १. भाषाभ्यासः

### I. पूरणप्रत्ययान्ताः

Read the following sentences.

१. पङ्क्तौ **प्रथमः** बालकः वामनः अस्ति ।

२. पुस्तकस्य **प्रथमे** पुटे प्रास्ताविकम् अस्ति ।

३. गिरीशस्य **प्रथमा** अग्रजा वित्तकोषे कार्यं करोति ।

४. गिरिजायाः **द्वितीया** अग्रजा सङ्गणककार्यालये कार्यं करोति ।

५. विद्यालये **द्वितीयः** प्रकोष्ठः विशालः अस्ति ।

६. **द्वितीयस्य** अट्टस्य उपरि **तृतीयः** अट्टः अस्ति ।

७. पाण्डवेषु **पञ्चमः** अस्ति सहदेवः ।

८. भगवद्गीतायां **षष्ठः** अध्यायः 'आत्मसंयमयोगः' ।

९. वर्गस्य **सप्तमे** दिने कौमुदीभोजनम् आसीत् ।

१०. **अष्टादशे** दिने महाभारतयुद्धं समाप्तम् ।

In the above sentences the words in bold type are ordinals. In Samskrita ordinals are called पूरणप्रत्ययान्ताः । Note the difference between Cardinals(1, 2, 3 etc) and Ordinals($1^{st}$, $2^{nd}$, $3^{rd}$ etc)

| संख्याः | पूरणप्रत्ययान्ताः |
|---|---|
| One - एकम् | First - प्रथमः |
| Two - द्वे | Second - द्वितीयः |
| Three - त्रीणि | Third - तृतीयः |
| Ten - दश | Tenth - दशमः |
| Twenty - विंशतिः | Twentieth - विंशतितमः |

| | पूरणप्रत्ययान्ताः | | |
|---|---|---|---|
| सङ्ख्या | पुं. | स्त्री | नपुं. |
| द्वे | द्वितीयः | द्वितीया | द्वितीयम् |
| त्रीणि | तृतीयः | तृतीया | तृतीयम् |
| चत्वारि | चतुर्थः | चतुर्थी | चतुर्थम् |
| पञ्च | पञ्चमः | पञ्चमी | पञ्चमम् |
| षट् | षष्ठः | षष्ठी | षष्ठम् |
| सप्त | सप्तमः | सप्तमी | सप्तमम् |
| अष्ट | अष्टमः | अष्टमी | अष्टमम् |
| नव | नवमः | नवमी | नवमम् |
| दश | दशमः | दशमी | दशमम् |
| एकादश | एकादशः | एकादशी | एकादशम् |
| द्वादश | द्वादशः | द्वादशी | द्वादशम् |
| त्रयोदश | त्रयोदशः | त्रयोदशी | त्रयोदशम् |
| चतुर्दश | चतुर्दशः | चतुर्दशी | चतुर्दशम् |
| पञ्चदश | पञ्चदशः | पञ्चदशी | पञ्चदशम् |
| षोडश | षोडशः | षोडशी | षोडशम् |
| सप्तदश | सप्तदशः | सप्तदशी | सप्तदशम् |
| अष्टादश | अष्टादशः | अष्टादशी | अष्टादशम् |

| नवदश | नवदशः | नवदशी | नवदशम् |
|---|---|---|---|
| विंशतिः | विंशतितमः | विंशतितमी | विंशतितमम् |
| एकविंशतिः | एकविंशतितमः | एकविंशतितमी | एकविंशतितमम् |
| त्रिंशत् | त्रिंशत्तमः | त्रिंशत्तमी | त्रिंशत्तमम् |
| चत्वारिंशत् | चत्वारिंशत्तमः | चत्वारिंशत्तमी | चत्वारिंशत्तमम् |
| द्विनवतिः | द्विनवतितमः | द्विनवतितमी | द्विनवतितमम् |
| शतम् | शततमः | शततमी | शततमम् |

**Remember**

To get the **पूरणप्रत्ययान्त** forms of numerals from **विंशतिः** onwards तमः, तमी and तमम् should be affixed to the संख्यावाचकशब्दः । These affixes are not added to numerals below twenty.

## II. चित्/चनप्रयोगः

(१) Study the following sentences-

१. **कश्चित्** पुरुषः तत्र गच्छति । [कश्चित् - some one(mas.)]

२. **काचित्** वृद्धा कथां वदति । [काचित् - some one(fem.)]

३. रमेशः **केनचित्** मित्रेण सह नगरं गतवान् ।

४. गृहस्वामिनी **कस्मैचित्** सेवकाय वस्त्रं दत्तवती ।

५. **कस्माच्चित्** वृक्षात् फलं पतितम् ।

६. **कस्मिंश्चित्** पुस्तके अहम् एतां कथां दृष्टवान् ।

७. छात्रः **कञ्चन** शिक्षकं पृष्टवान् आसीत् ।

८. **केषुचित्** विद्यालयेषु उत्तमं पाठनं न प्रचलति ।

९. **केभ्यश्चित्** जनेभ्यः त्यागः न रोचते ।

१०. अहं **कांश्चन** प्रश्नान् प्रष्टुम् इच्छामि ।

Observe the words in bold type in the above sentences. To the

different cases of the word किम् the avyaya चित् or चन has been added. चित् and चन convey an unspecified thing or person here. Take the first example कश्चित् पुरुषः । Since the speaker is not sure who the person is he is saying कश्चित् पुरुषः - 'some one'. The other examples have to be understood similarly.

२. काचित् वृद्धा – a certain old lady
३. केनचित् मित्रेण सह – with a friend
४. कस्मैचित् सेवकाय – to a servant
५. कस्माच्चित् वृक्षात् – from some tree
६. कस्मिंश्चित् पुस्तके – in some book
७. कञ्चन शिक्षकम् – some teacher
८. केषुचन विद्यालयेषु – in some schools.
९. केभ्यश्चित् जनेभ्यः – to some people.
१०. कांश्चन प्रश्नान् – some questions etc.

नियमाः

☞ चित् and चन are both indeclinables.
☞ There is no difference in the meaning conveyed by them.
☞ They are added only to the different forms of किंशब्द ।
☞ किंशब्द being a विशेषण, takes the gender, number and case of the विशेष्य ।
☞ Note the changes in the forms of words when चित् and चन are added.

| पुं | स्त्री |
|---|---|
| कम् + चन = कञ्चन | काः + चित् = काश्चित् |
| कान् + चन = कांश्चन | काम् +चित् = काश्चित् |
| कैः + चित् = कैश्चित् | काभिः + चित् = काभिश्चित् |
| कस्मात् + चित् = कस्माच्चित् | कस्याः + चित् = कस्याश्चित् |

केषाम् + चित् = केषाञ्चित्      कासाम् + चित् = कासाञ्चित्
कस्मिन् +चित् = कस्मिंश्चित्      कस्याम् + चित् = कस्यांश्चित्

(२) Read the following sentences.

१. मम लेखनी कुत्रचित् पतिता । (कुत्रचित् - somewhere)
२. कदाचित् सज्जनः अपि रुष्टः भवति ।
(कदाचित् - sometimes)
३. प्रकोष्ठे कुतश्चित् शीतवायुः आगच्छति ।
(कुतश्चित् - from somewhere)
४. कतिचित् नाणकानि प्राप्य भिक्षुकः सन्तुष्टः ।
(कतिचित् - a few)
५. कथञ्चित् बालकः वृक्षम् आरूढवान् । (कथञ्चित् - some how)

In the above sentences to the interrogative words कुत्र, कदा, कुतः, कति and कथम् - चित् and चन have been affixed in the sense of uncertainty. These are called अनिश्चयार्थकाः शब्दाः । Thus, a word ending in चित् or चन denotes an unspecified thing or person.

## अभ्यासः

I. Write the ordinal forms of the cardinals given below as shown in the example.

उदा - १. (२) = द्वितीयः

१. (५) ........ २. (९) ........ ३. (१२) ........
४. (१५) ........ ५. (१९) ........ ६. (२४) ........
७. (२८) ........ ८. (३३) ........ ९. (३७) ........
१०. (४१) ........ ११. (५२) ........ १२. (६१)........
१३. (६८) ........ १४.(७४)........ १५. (७७)........
१६. (८४) ........ १७. (८८) ........ १८. (९५) ........
१९. (९८)........ २०. (१००) ........

**II.** Fill in the blanks with the ordinal forms of the numerals in brackets. (Remember that the ordinals should agree with the noun in gender, number and case.)

उदा - प्रथमे (१) दिने उद्घाटनकार्यक्रमः आसीत् ।

१. वृद्धा ......... (२) पुत्रेण सह वसति ।
२. .......... (३) कपाटिकायाः पुस्तकानि आनयतु ।
३. नक्षत्रेषु ............ (२७) नक्षत्रं रेवती ।
४. सुनीतायाः ........... (५) पुत्र्यै प्रशस्तिः प्रदत्ता ।
५. इतः ........... (२०) गृहे मम पितृव्यः वसति ।
६. अधिकारी ............. (३०) अह्नात् आगमिष्यति ।
७. विद्यालयस्य ........... (१९) प्रकोष्ठे संस्कृतपाठः प्रचलति ।
८. जयनगरस्य ........... (२२) उपमार्गात् यानम् आगच्छति ।
९. सैनिकः ........... (४०) वयसि एव मृतवान् ।
१०. अस्माकं सुहृदः ............ (६) याने उपविष्टवन्तः ।

**III.** According to the gender, number and case of the **विशेष्य** fill in the blanks with the suitable forms of **किंशब्द** with **चित्/चन** ।

उदा - केनचित् बालकेन

| | |
|---|---|
| १. .......... चषकेषु | २. .......... युवतिम् |
| ३. .......... नगरेभ्यः | ४. .......... उत्पीठिकायाम् |
| ५. .......... लेखनीनाम् | ६. .......... ध्वजस्य |
| ७. .......... कुञ्चिकया | ८. .......... विचारैः |
| ९. .......... शाटिकायाः | १०. .......... फलानि |

**IV.** Fill in the blanks in the following sentences as in the previous exercise.

उदा - वयम् अद्य काञ्चित् कथां शृणुयाम ।

१. वर्गार्थं .......... राज्येभ्यः जनाः आगताः ।
२. कार्यक्रमे ......... बालकं वेदिकां प्रति आहूतवन्तः ।
३. ........ आपणेषु उत्तमफलानि प्राप्यन्ते ।
४. लोकयाने ......... पुरुषस्य धनस्यूतः नष्टः ।

५. ह्यः अहं ......... पत्रिकायां विवेकानन्दस्य भावचित्रं दृष्टवती ।
६. ......... जनैः धनसङ्ग्रहणं कृतम् ।
७. सा ........ महिलाभ्यः शाटिकां दत्तवती ।
८. ........ संवत्सरेषु देशे सुभिक्षता दृश्यते ।

**V.** Following the gender number and case of the विशेष्य write the suitable forms of the संख्यावाचक or पूरणप्रत्ययान्त in the blanks.

पूर्वम् (१) ..... कृषिकः आसीत् । तस्य (४) ..... पुत्राः आसन् । एकदा कृषिकः (४) ...... पुत्रेभ्यः एकैकं रूप्यकं दत्त्वा - ''एतस्य रूप्यकस्य उत्तमम् उपयोगं कुर्वन्तु'' इति सूचितवान् ।

सायङ्काले (३) ..... पुत्राः गृहम् आगतवन्तः । (४) ..... पुत्रः न आगतवान् । (१) ...... पुत्रः - ''अहम् (१) ..... रूप्यकेण फलानि क्रीत्वा खादितवान्'' इति उक्तवान् । (२) ..... ''अहं मोदकानि स्वीकृत्य मित्रैः सह खादितवान्'' इति उक्तवान् । (३) ..... देवाय धनं समर्पितवान् आसीत् । ''मम कार्यम् उत्तमम्'' मम कार्यम् उत्तमम्'' इति ते चर्चाम् आरब्धवन्तः । तदा कृषिकः ''(४) .... पुत्रस्य आगमनपर्यन्तं निर्णयः नास्ति'' इति उक्तवान् ।

तदा (१) .... पुत्रः - ''(४) ...... कुत्रापि निद्रां कृतवान् स्यात्'' इति उक्तवान् । (३) ..... पुत्रः - ''सः प्रायः मद्यपानं कर्तुं गतवान् इति चिन्तयामि'' इति उक्तवान् । (२) ....... पुत्रः - ''(४) ....... चलच्चित्रं द्रष्टुं गतवान् स्यात्'' इति उक्तवान् । (३) ..... पुत्राः अपि (४) ...... पुत्रस्य विषये उपहासम् आरब्धवन्तः ।

तावता (४) .... पुत्रः गृहम् आगतवान् । (३) .... सहोदरान् उद्दिश्य - ''क्षम्यताम् । आगमनमार्गे कश्चित् भिक्षुकः आसीत् । सः ज्वरपीडितः आसीत् । तस्य चिकित्साव्यवस्थां कृत्वा औषधम् आनीय दत्तवान् । अतः विलम्बः अभवत्'' इति उक्तवान् । कृषिकः (४) ....... पुत्रम् प्रीत्या आलिङ्गितवान् । **(Answers on PNo - 233)**

## २. व्यावहारिकशब्दावली

**Words related to Land**

पुंलिङ्गशब्दाः - द्वीपः - Island, लोकः - World, पर्वतः - Mountain,

पाषाणः - Stone, परिसरः - Environment/Atmosphere पङ्कः - Mud, Mire, मार्गः - Road, केदारः - Field.

स्त्रीलिङ्गशब्दाः - वसुधा - Earth, मृत्तिका - Soil, Clay.

नपुंसकलिङ्गशब्दाः - पुलिनम् - Sand, सैकतम् - Sandy , चूर्णम् -Powder, लोष्ठम् - lump of clay.

**Words related to Water**

पुंलिङ्गशब्दाः - समुद्रः - Sea, कूपः - Well, गर्तः - Pit, तरङ्गः - Wave, कासारः - Lake, ह्रदः - Deep pool, कल्लोलः - Large wave, तटः - Shore/Bank, आवर्तः - Whirl pool, जलनिर्गमः - Canal, जलाशयः - Pond.

स्त्रीलिङ्गशब्दाः - आपगा - River गङ्गा, नर्मदा, यमुना etc.

नपुंसकलिङ्गशब्दाः - जलम् - Water, पारम् - Shore, आवारम् - The shore on our side, पल्वलम् - A small pool or pond, आलवालम् - Water-basin around a plant.

## ३. चाटुश्लोकः

Śiva's attire makes him look like a beggar. He must support his family by begging only. Pārvati is dejected by this profession of her husband. So she suggests -

रामाद्याचय मेदिनीं धनपतेर्बीजं बलाल्लाङ्गलं
प्रेतेशान्महिषं तवास्ति वृषभः फालं त्रिशूलं तव ।
शक्ताहं तव चान्नदानकरणे स्कन्दोऽस्ति गोरक्षणे
खिन्नाहं हर भिक्षया कुरु कृषिं गौरीवचः पातु वः ।।

"Beg a piece of land from Paraśurāma (who has won the entire earth). Ask Kubera, your friend, for seeds and Balarāma for the plough. Get the bison from Yama. You have, however, a bull of your own. Your trident will serve for the iron piece in the plough. I am capable of bringing you food. Ṣaṇmukha will take the cattle for grazing. Take to farming O' Hara ! I am fed up with this beggary". May these words of Gauri protect you.

## ४. समस्या

आगतः पाण्डवाः सर्वे दुर्योधनसमीहया ।
तस्मै गां सुवर्णं च रत्नानि विविधानि च ।।

Upon a cursory glance the meaning of this verse seems incomplete. Because it has no verb. It means : All Pāndavas came aspiring for Duryodhana. To him..... the cow, gold and various jewels. Find out the verb and try to complete the sense.

(Answer on PNo - 60)

## ५. सुभाषितम्

श्लोकार्धेन प्रवक्ष्यामि यदुक्तं ग्रन्थकोटिभिः ।
परोपकारः पुण्याय पापाय परपीडनम् ।।५।।

पदविभागः - श्लोकार्धेन, प्रवक्ष्यामि, यत्, उक्तम्, ग्रन्थकोटिभिः, परोपकारः, पुण्याय, पापाय, परपीडनम् ।

**प्रतिपदार्थः** - ग्रन्थकोटिभिः - By millions of works, यत् - what, उक्तम् - has been said, (तत् - that) श्लोकार्धेन - with half a stanza, प्रवक्ष्यामि - I shall say. परोपकारः - Helping others, पुण्याय - brings merit, परपीडनम् - troubling others, पापाय - gives rise to sin.

**तात्पर्यम्** - What hundreds of works have said, I shall say in just half a stanza. By helping others, one acquires religious merit and by troubling them, sin.

Many a work teaches values and ethics in different ways with a number of illustrations. But the underlying teaching in all of them is the universal truth that "Helping others brings merit and troubling them causes sin". Each work may adopt a different style, use various examples and characters in its stories. But the core of all their teaching is this only.

जलबिन्दुनिपातेन क्रमशः पूर्यते घटः ।
स हेतुः सर्वविद्यानां धर्मस्य च धनस्य च ।।६।।

पदविभागः - जलबिन्दुनिपातेन, क्रमशः, पूर्यते, घटः, सः, हेतुः, सर्वविद्यानाम्, धर्मस्य, च, धनस्य, च ।

**प्रतिपदार्थः** - जलबिन्दुनिपातेन - By water drops falling, **क्रमशः** - gradually, **घटः** - a pot, **पूर्यते** - is filled. **सर्वविद्यानाम्** - For all branches of learning, **धर्मस्य** - Dharma (religious merit) **धनस्य च** - and money, **सः हेतुः** - the same rule applies.

**तात्पर्यम्** - Just as drops of water gradually fill a pot, so does one acquire knowledge, merit and wealth little by little. A single drop of water, a bit of knowledge, a single meritorious act or a small amount of money may look very insignificant. But as they add up the droplets fill a pot; knowledge gained over a period of time makes one a scholar; Dharma earned by small acts of merit will one day bear fruit; and money accumulated little by little makes a man rich. One must remember that knowledge, merit earned by a pious act and money, however small, are valuable.

## ६. पदसङ्ग्रहः

**मिल्** - to meet

१. मिलति २. मिल्यते ३. मेलिष्यति
४. मेलितव्यम् - मेलनीयम् ५. मिलितः - मिलिता - मिलितम्
६. मिलितवान् - मिलितवती ७. मिलन् - मिलन्ती ८. मिलित्वा - सम्मिल्य ९. मेलितुम् ।

**धाव्** - to run, to wash

१. धावति २. धाव्यते ३. धाविष्यति
४. धावितव्यम् - धावनीयम् ५. धावितः - धाविता - धावितम्, धौतः - धौता - धौतम् ६. धावितवान् - धावितवती, धौतवान् - धौतवती ७. धावन् - धावन्ती ८. धावित्वा - धौत्वा - प्रधाव्य ९. धावितुम् ।

**नन्द्** - to rejoice, to be delighted

१. नन्दति २. नन्द्यते ३. नन्दिष्यति

४. नन्दितव्यम् - नन्दनीयम् ५. नन्दितः - नन्दिता - नन्दितम्

६. नन्दितवान् - नन्दितवती ७. नन्दन् - नन्दन्ती ८. नन्दित्वा - अभिनन्द्य (having congratulated) ९. नन्दितुम् ।

## ७. काव्यकथा

### नन्दिन्याः वरप्रसादः

सिंहः पुनः अवदत् - ''नृप । तव भूतदया योग्या । किन्तु त्वं शरीरं त्यक्तुम् इच्छसि । तेन एका धेनुः रक्षिता भवति । यदि जीवसि, सर्वाः प्रजाः रक्षिताः भवन्ति । 'आचार्यस्य एका एव धेनुः अस्ति । सा मृता भवति चेत् आचार्यः कुपितः भवति' इति चिन्ता न कर्तव्या । आचार्याय कोटिशः धेनुदानं कुरु'' इति ।

दिलीपः सिंहस्य वाक्यं श्रुत्वा - ''यदि अहं धेनुरक्षणं न करोमि तर्हि मम जीवनम् एव व्यर्थम् । त्वम् अपि पराधीनः खलु ? त्वं वृक्षस्य रक्षणं करोषि । यदि वृक्षः नष्टः भवति तर्हि ईश्वरं कथं पश्यसि ? अतः अहं मम शरीरं ददामि । आचार्यस्य धेनुं त्यज'' इति अकथयत् ।

सिंहः नृपस्य प्रार्थनाम् अङ्गीकृतवान् । नृपः मुखम् अधोभागे अकरोत् । प्राणान् त्यक्तुं सिद्धः अभवत् । तत्क्षणे पुष्पवृष्टिः अभवत् । ''वत्स, उत्तिष्ठ'' इति ध्वनिः श्रुतः । दिलीपः अपश्यत् । सिंहः नास्ति । केवलं नन्दिनी ।

नन्दिनी नृपं दृष्ट्वा - 'मया परीक्षा कृता । सर्वं मम माया । तव सेवया अहं प्रसन्ना । वरं ददामि । पृच्छ' इति अकथयत् । दिलीपः - 'मम सन्तानः भवतु' इति प्रार्थनां कृतवान् । नन्दिनी वरं दत्तवती । 'मम क्षीरं पिब' इति उक्तवती । नृपः क्षीरं पीतवान् ।

परस्मिन् दिने नृपः सुदक्षिणा च राजधानीम् आगतौ । कालः अतीतः । सुदक्षिणा गर्भवती अभवत् । शुभे मुहूर्ते पुत्रं प्रसूतवती । नृपः पुत्रस्य 'रघुः' इति नामधेयं कृतवान् ।

## Nandini Grants a Boon

The lion said again-" O king! Your compassion towards beings is justified. But you want to give up your body. A single cow can be saved by this act. If you live all your subjects will be protected. Do not think that your preceptor has only one cow. And if it is killed the preceptor will get angry. You can give crores of cows to Vasiṣtha."

Dilīpa heard the words of the lion and said: " If I cannot save the cow, my life itself is in vain. You too are a (servant) dependent. You are looking after the tree. If the tree is destroyed, how can you face Ishvạra? Hence, I am offering my body. Let go the cow that belongs to my preceptor."

The lion accepted the king's request. The king, bent down his head, he got ready to give up his life. At that moment, there was a shower of flowers. A voice spoke: "Son! rise up". Dilipa looked up. There was no lion. Nandinī alone was there.

Nandinī saw the king and said: "I tested You. All that was my magic. I am pleased with your service. I shall grant a boon. You may ask." Dilīpa requested "May I beget children." Nandinī granted the boon. She said "drink my milk." The king drank the milk.

The next day the king and Sudakṣiṇa came to the capital. Time passed. Sudakṣiṇa became pregnant. During an auspicious period, she gave birth to a son. The king named him Raghu.

**एतेषाम् उत्तरं लिखत ।**

१. दिलीपः कं वरं पृष्टवान् ?
२. आचार्यस्य कति धेनवः सन्ति ?
३. नृपः यदि जीवति तर्हि काः रक्षिताः भवन्ति ?
४. दिलीपस्य पुत्रस्य नाम किम् ? **(Answers on PNo - 233)**

## ८. अन्वयक्रमः

स सत्यवचनाद्राजा धर्मपाशेन संयतः ।
विवासयामास सुतं रामं दशरथः प्रियम् ।।

**पदविभागः** - सः, सत्यवचनात्, राजा, धर्मपाशेन, संयतः, विवासयामास, सुतम्, रामम्, दशरथः, प्रियम् ।

**अन्वयः** - सत्यवचनात् धर्मपाशेन संयतः सः राजा दशरथः प्रियं सुतं विवासयामास ।

**अन्वयार्थः** - सत्यवचनात् - On account of his truthfulness, सः राजा - that king, दशरथः - Daśaratha, संयतः - who was bound, धर्मपाशेन - by the code of (literally पाशेन means by a snare) righteousness, विवासयामास - exiled, प्रियम् सुतम् - his dear son, रामम् - Rāma.

**तात्पर्यम्** - Daśaratha was bound by Dharma. He could not go back on his promise made to Kaikeyi earlier. To remain truthful he had to give her the two boons that she wanted now even though her cruel demand was extremely difficult to comply with. Rāma was Daśaratha's dearest son who possessed all good qualities and was blameless. How could he send such a son on exile ? Thus the king was caught in a fix. With no alternative, very reluctantly, he had to send his son to the forest.

स जगाम वनं वीरः प्रतिज्ञामनुपालयन् ।
पितुर्वचननिर्देशात् कैकेय्याः प्रियकारणात् ।।

**पदविभागः** - सः, जगाम, वनम्, वीरः, प्रतिज्ञाम्, अनुपालयन्, पितुः, वचननिर्देशात्, कैकेय्याः, प्रियकारणात् ।

**अन्वयः** - सः वीरः पितुः वचननिर्देशात् कैकेय्याः प्रियकारणात् प्रतिज्ञाम् अनुपालयन् वनं जगाम ।

**अन्वयार्थः** - सः वीरः - The brave Rāma, जगाम - went, वनम् - to the forest, अनुपालयन् - observing, प्रतिज्ञाम् - a vow, पितुः वचननिर्देशात् - on his father's command, कैकेय्याः प्रियकारणात् - in order to please Kaikeyi.

**तात्पर्यम्** - Kaikeyi would be pleased only if both her wishes were fulfilled. This put Daśaratha in a dilemma. He could remain truthful only by granting her wishes. And when he did so he would be sending his dear son on exile. To save his father from breaking a

promise in a situation like this, Rāma went to the forest, obeying the former's command without a word of protest.

## १. अनुवादपद्धतिः

In translation the correct use of indeclinables is an important factor. The intended sense is clearly expressed only by the proper use of indeclinables. In the present lesson the use of three indeclinables, viz., च = 'and', एव = 'only' and अपि = 'also' is given.

**I. च = and.**

This is used when words are to be conjoined.

Eg - Rāma and Krișņa - रामः कृष्णः च

Sītā and Savitrī - सीता सावित्री च

Rāma, Laksmaņa and Sītā - रामः लक्ष्मणः सीता च

In English 'and' is used before the last in the list, whereas in Samskrit it is used only at the end.

**II. एव (अवधारणार्थक - अव्ययम्) = certainly, definitely**

Eg - तत्र एव अस्ति = It is there only.

This word lays emphasis on a statement. It conveys certainty. This is called अवधारणा/निश्चयः । The word एव should be placed after that word, which is to be emphasised.

रामः एव नगरं गच्छति । = Only Rāma goes to the city.(nobody else)

रामः नगरम् एव गच्छति । = Rāma goes to the city only. (nowhere else)

रामः नगरं गच्छति एव । = Rāma will certainly go to the city. (There is no doubt about his going)

In the above sentences observe that by adding एव to the subject, object and the verb that particular word is emphasised.

Here follow some examples of एव coming after verbs.

He is certainly coming - आगच्छति एव ।
I shall definitely listen - शृणोमि एव ।
They are surely coming - आगच्छन्ति एव ।
He has come ofcourse / afterall - (सः) आगतवान् एव ।
It has surely fallen - पतितम् एव ।
I shall certainly see - पश्यामि एव ।
I shall certainly do - करोमि एव ।
It will surely be found - लभ्यते एव ।
She has certainly given - दत्तवती एव ।

**III. अपि = also, too**

अपि is also placed after a word like **एव** but in a different sense.

रामः अपि नगरम् आगच्छति – Rāma too is coming to the city.
(along with somebody else)
रामः नगरम् अपि आगच्छति – Rāma is coming to the city too.
(is going elsewhere also)
रामः नगरम् आगच्छति अपि – Rāma is coming also to the city.
(is doing something else too)

Translate to English.

१. ब्रह्मदेवं विष्णुं शिवं च ध्यायत ।
२. कैलासे देवाः गन्धर्वाः च निवसन्ति ।
३. लेखनी गृहे एव अस्ति ।
४. अहं लेखनीं आनेतुम् एव विस्मृतवान् ।
५. सायं वृष्टिः भविष्यति एव ।
६. मम समीपे धनं नास्ति एव ।
७. वृक्षे पर्णानि एव न सन्ति ।
८. त्वया सह अहम् अपि आगच्छामि ।
९. सः कदाचित् आगच्छति अपि ।
१०. सः सज्जनः चतुरः च ।

(लेखनी - pen, वृष्टिः - rain, पर्णानि - leaves, कदाचित् - sometimes)
Translate into Samskrit.

1. Call Rāma, Krişņa and Mohana.
2. Gods as well as the demons waged war.
3. Rāma, Lakṣmaṇa and sita went to the forest.
4. The sage lives in the forest only.
5. Mahesh himself has had come here today.
6. There is no time to write a letter either.
7. Go only after reading this book.
8. You too come with me.
9. As he is earning, he spends as well.
10. The officer comes to the village too.

## १०. सन्धिः
## गुणसन्धिः

Note the following examples.

१. **महेश्वरः** कैलासे वसति । २. सः आलस्यं **नेच्छति** ।
३. **सूर्योदयः** रमणीयः भवति । ४. भक्तः **गङ्गोदकं** पिबति ।
५. सः **महर्षिः** अस्ति । ६. **ग्रामर्षभः** स्वेच्छया सञ्चरति ।

In the above examples the bold words are made of two words. Let us split them up.

---

**अनुवादपद्धतिः**

1. Meditate upon Brahma, Viṣṇu and Śiva. 2. In Kailāsa Gods and gandharvas live. 3. The pen is at home only. 4. I forgot to bring the pen itself. 5. It is sure to rain in the evening. 6. I haven't any money at all. 7. There are no leaves at all in the tree. 8. With you I shall also come. 9. Sometimes he comes also. 10. He is pious and clever.

१. रामं कृष्णं मोहनं च आह्वय । २. देवाः राक्षसाः च युद्धं कृतवन्तः । ३. रामः लक्ष्मणः सीता च अरण्यं गतवन्तः । ४. ऋषिः अरण्ये एव वसति । ५. महेशः एव अद्य अत्र आगतवान् । ६. पत्रं लेखितुमेव समयः नास्ति । ७. एतत् पुस्तकं पठित्वा एव गच्छ । ८. त्वमपि मया सह आगच्छ । ९. सः सम्पादयति व्ययीकरोति अपि । १०. अधिकारी ग्राममपि आगच्छति ।

१. महेश्वरः = महा + ईश्वरः (आ + ई = ए)
२. नेच्छति = न + इच्छति (अ + इ = ए)
३. सूर्योदयः = सूर्य + उदयः (अ + उ = ओ)
४. गङ्गोदकम् = गङ्गा + उदकम् (आ + उ = ओ)
५. महर्षिः = महा + ऋषिः (अ + ऋ = अर्)
६. ग्रामर्षभः = ग्राम + ऋषभः (अ + ऋ = अर्)

When the vowels अ, आ are followed by इ, उ, ऋ, in the place of the two vowels ए, ओ and अर् are substituted. Such a euphonic combination is called 'गुणसन्धिः' । Observe this sandhi in the above examples.

Here are some more examples -

१. राज + ईश्वरी = राजेश्वरी (अ + ई = ए)
२. महा + उन्नतिः = महोन्नतिः (आ + उ = ओ)
३. गण + ईशः = गणेशः (अ + ई = ए)
४. लम्ब + उदरः = लम्बोदरः (अ + उ = ओ)
५. राजा + इति = राजेति (आ + इ = ए)
६. देव + ऋषिः = देवर्षिः (अ + ऋ = अर्)
७. सर्वस्य + उपरि = सर्वस्योपरि (अ + उ = ओ)
८. च + इति = चेति (अ + इ = ए)
९. माता + इव = मातेव (आ + इ = ए)
१०. क्षीर + उदधिः = क्षीरोदधिः (अ + उ = ओ)

## अभ्यासः

**I.** Split the following words.

१. परोपकारः २. शीतोष्णम् ३. उत्तमोत्तमम्
४. अर्धोरुकम् ५. वसन्तर्तुः ६. राजर्षिः
७. नागेन्द्रः ८. अरुणोदयः ९. पादोनम्
१०. महोत्सवः

**II.** Join the following words.

१. राजा + इन्द्रः २. मिथिला + ईशः ३. पिता + इति

४. यथा + इष्टम् ५. परम + उन्नतम् ६. न + उक्तम्
७. पुरुष + उत्तमः ८. महा + ऋणम् ९. प्राचीन + उक्तिः
१०. श्रुत + ऋषिः

## ११. सङ्ग्राह्यविषयाः

**Famous fives**

पञ्चकन्याः - अहल्या, द्रौपदी, सीता, तारा, मण्डोदरी ।
पञ्च पाण्डवाः - युधिष्ठिरः, भीमः, अर्जुनः, नकुलः, सहदेवः ।
पञ्च भूतानि - पृथिवी, आपः, तेजः, वायुः, आकाशः ।
पञ्च अङ्गानि - तिथिः, वासरः, नक्षत्रम्, योगः, करणम् ।
पञ्च बाणाः - अरविन्दम्, अशोकम्, चूतम्, नवमल्लिका, नीलोत्पलम् ।
पञ्च यज्ञाः - देवयज्ञः, पितृयज्ञः, भूतयज्ञः, मनुष्ययज्ञः, ब्रह्मयज्ञः
पञ्च उपचाराः - गन्धः, पुष्पम्, धूपः, दीपः, नैवेद्यम् ।

**Tradition**

**शमी शमयते पापं शमी शत्रुविनाशिनी ।**
**अर्जुनस्य धनुर्धारिरामस्य प्रियदर्शिनी ॥**

The Śamī tree was very dear to Arjuna and Rāma who wields a bow. It destroys one's sins and enemies. There is the practice of distributing Śamī on the day of Vijayadaśamī and the above sloka is recited on that occasion.

**Answer to the Riddle**

सर्वे दुर्योधनसमीहया - Here, split the words as सर्वे, अदुः, यः, धनसमीहया । तस्मै - To him, यः - who, आगतः - came, धनसमीहया - with the desire for money, सर्वे पाण्डवाः - all the Pāndavas, अदुः - gave, गाम् - cow, सुवर्णम् - gold, विविधानि रत्नानि च - and various jewels.
Here the verb अदुः concealed in सर्वे + अदुः = सर्वेऽदुः, was the cause of the puzzle.

# परिचयः - तृतीयः पाठः

## प्रश्नाः

I. Change the form of the विशेष्य according to the विशेषण and rewrite the sentence.

१. कश्चित् पुस्तके दोषः अस्ति ।
२. केनचित् वृक्षात् पर्णं पतितम् ।
३. अहं केचन वाक्यानि वदामि ।
४. कासाञ्चन महिलाः साहसशीलाः भवन्ति ।
५. केभ्यश्चन जनानां सङ्गीते रुचिः ।
६. काचित् शालासु छात्राः अधिकाः भवन्ति ।

II. Choose the correct form and write it in the box.

१. पञ्चमी / पञ्चमा
२. पञ्चदशी / पञ्चदशा
३. चतुर्थी / चतुर्था
४. अष्टादशी / अष्टादशतमी
५. विंशतितमी / विंशतितमा
६. शततमा / शततमी
७. कस्मिंश्चित् / कस्मिश्चित्
८. कस्माचित् / कस्माच्चित्

III. Say whether the following statements are correct or incorrect.

1. The particles चित् and चन donot give the same meaning.
2. The particles चित् and चन denote a nonspecific object or person.
3. In गुणसन्धि the last vowel of the former word is 'इ' ।
4. तमः, तमी, तमम् can be added to दश ।
5. महौषधिः is an example of गुणसन्धिः ।

(**Note:** Answers for the above exercises are given in the end of this book. **(PNo - 233)** After completing the exercises check your answers.)

# परिचयः - चतुर्थः पाठः

मनस्वी कार्यार्थी न गणयति दुःखं, न च सुखम् ।
A bold person aiming to accomplish a task does not bother about difficulties or comforts.

## १. भाषाभ्यासः

### सम्भावनार्थे लिङ्लकारः

Read the following sentences carefully.

१. अद्य सायं वृष्टिः **भवेत्** । = It might rain today evening.
२. यानम् इदानीम् **आगच्छेत्** । = The vehicle might come now.
३. मम प्रत्यागमने विलम्बः **स्यात्** । = There could be a delay in my returning.
४. अद्य अध्यापकः पाठद्वयं **पाठयेत्** । = The teacher might teach two lessons today.
५. सीता प्रायः पुस्तकं **न पठेत्** । = Sita might not read the book.
६. सा गीतं न **गायेत्** । = She might not sing the song.
७. पिता नूतनवस्त्रम् **आनयेत्** । = Father might bring new clothes.
८. धनिकः दश रूप्यकाणि **दद्यात्** । = The rich person might give ten rupees.
९. अद्य बान्धवाः मम गृहम् **आगच्छेयुः** । = Relatives might come to my house today.

१०. ते फलानि **आनयेयुः** । = They might bring fruits.
११. छात्राः परश्वः प्रवासं **कुर्युः** । = Students might go on a tour the day after tomorrow.
१२. जनाः नायकं **सम्मानयेयुः** । = People might felicitate the leader.
१३. अहं काव्यं **लिखेयम्** । = I shall write an epic.
१४. वयं नाटकम् **अभिनयेम** । = We shall enact the play.
१५. वयं श्वः नाटकं **पश्येम** । = We shall watch the play tomorrow.

In the above sentences, the bold words indicate probability - might rain, might come, might go etc. सम्भावना means 'guessing' When there is no certainty, this form of the verb is used to denote probability.

रामः गच्छति = Rama goes. Here Rama's going is certain. When we are not sure whether or not Rama will go, we guess. Then we say 'रामः गच्छेत्' Rama might go.

In this sense of probability लिङ् लकार is used.

लिङ् लकारः - परस्मैपदरूपाणि

| | *ए.व.* | *द्वि.व.* | *ब.व.* |
|---|---|---|---|
| प्र.पु. | पठेत् | पठेताम् | पठेयुः |
| म.पु. | पठेः | पठेतम् | पठेत |
| उ.पु. | पठेयम् | पठेव | पठेम |

लिङ् लकारः - आत्मनेपदरूपाणि

| | *ए.व.* | *द्वि.व.* | *ब.व.* |
|---|---|---|---|
| प्र.पु. | वन्देत | वन्देयाताम् | वन्देरन् |
| म.पु. | वन्देथाः | वन्देयाथाम् | वन्देध्वम् |
| उ.पु. | वन्देय | वन्देवहि | वन्देमहि |

Note the difference in forms between लट् लकार and लिङ् लकार.

| | परस्मैपदी | आत्मनेपदी |
|---|---|---|
| वर्तमाने | - पठ्+ अ+ति = पठति | वन्द् + अ+ते = वन्दते |
| लिङ्लकारे | - पठ्+ ए+त् = पठेत् | वन्द् + ए+त = वन्देत |

The forms of regular roots are as shown above.

| वर्तमाने | लिङ् प्र.पु | | लिङ् उ.पु | |
|---|---|---|---|---|
| | ए.व. | ब.व. | ए.व. | ब.व. |
| लिखति | लिखेत् | लिखेयुः | लिखेयम् | लिखेम |
| गच्छति | गच्छेत् | गच्छेयुः | गच्छेयम् | गच्छेम |
| नयति | नयेत् | नयेयुः | नयेयम् | नयेम |
| पतति | पतेत् | पतेयुः | पतेयम् | पतेम |
| वन्दते | वन्देत | वन्देरन् | वन्देय | वन्देमहि |
| श्लाघते | श्लाघेत | श्लाघेरन् | श्लाघेय | श्लाघेमहि |

Important forms of some commonly used irregular roots are as below-

| वर्तमाने | लिङ् प्र.पु | | लिङ् उ.पु. | |
|---|---|---|---|---|
| | ए.व. | ब.व. | ए.व. | ब.व. |
| करोति | कुर्यात् | कुर्युः | कुर्याम् | कुर्याम |
| ददाति | दद्यात् | दद्युः | दद्याम् | दद्याम |
| शृणोति | शृणुयात् | शृणुयुः | शृणुयाम् | शृणुयाम |
| शक्नोति | शक्नुयात् | शक्नुयुः | शक्नुयाम् | शक्नुयाम |
| जानाति | जानीयात् | जानीयुः | जानीयाम् | जानीयाम |
| क्रीणाति | क्रीणीयात् | क्रीणीयुः | क्रीणीयाम् | क्रीणीयाम |
| अस्ति | स्यात् | स्युः | स्याम् | स्याम |

## अभ्यासः

I. Write the लिङ्लकार forms of the following verbs in First

person singular.

उदा - गच्छति - <u>गच्छेत्</u>

१. क्रीडति - .............. २. नयति - ............
३. त्यजति - .............. ४. चोरयति - ..............
५. वदति - .............. ६. पश्यति - ..............
७. उपविशति - ............ ८. वन्दते - ..............
९. कथयति - ............ १०. श्रृणोति - ..............

**II.** Write the other two numbers of the following.

उदा - तिष्ठेत् <u>तिष्ठेताम्</u> <u>तिष्ठेयुः</u>

१. स्पृशेत् ............ ............ ।
२. ............ ताडयेताम् ............ ।
३. ............ ............ चोरयेयुः ।
४. दद्याम् ............ ............ ।
५. ............ कुर्याव ............ ।
६. जानीयात् ............ ............ ।
७. उपविशेत् ............ ............ ।
८. वन्देत ............ ............ ।
९. ............ ............ हरेयुः ।
१०. ............ कथयेव ............ ।

**III.** Write the corresponding लिङ् forms of the verbs in लट् लकारः given below.

उदा - पठन्ति - <u>पठेयुः</u>

१. हसन्ति ........ २. खादति ........ ३. वन्दते........
४. कम्पते ........ ५. लिखन्ति ........ ६. भवन्ति ........
७. करोति ........ ८. प्रवहति ........ ९. तिष्ठन्ति ........
१०. पतति ........ ११. हसन्ति ........ १२. मिलन्ति ........

१३. नमति ........ १४. शोभते ........ १५. कम्पन्ते ........

**IV.** Seeing the cloudy sky someone thinks that are likely the following events. The sentences are in present tense (लट् लकारः) Change the verbs into लिङ् लकारः and rewrite the same.

उदा - इदानीं वृष्टिः भवति । - इदानीं वृष्टिः भवेत् ।

१. जलबिन्दवः पतन्ति । जलबिन्दवः ......... ।
२. मार्गेषु जलं प्रवहति । मार्गेषु जलं ......... ।
३. भूमिः आर्द्रा भवति । भूमिः आद्रा ......... ।
४. जनाः आश्रये तिष्ठन्ति । जनाः आश्रये ......... ।
५. केचन छत्रम् उद्घाटयन्ति । केचन छत्रम् ........ ।
६. यानानि मन्दं गच्छन्ति । यानानि मन्दं ......... ।
७. यानात् अवतीर्य जनाः धावन्ति । यानात् अवतीर्य जनाः....... ।
८. निर्धनानां गृहाणि पतन्ति । निर्धनानां गृहाणि ......... ।
९. तद्गृहजनाः रोदनं कुर्वन्ति । तद्गृहजनाः रोदनं ......... ।
१०. अधिकारिणः आगच्छन्ति । अधिकारिणः ......... ।

**V.** Change the following sentences into plural number.

उदा - मानवः धर्मं पालयेत् । - मानवाः धर्मं पालयेयुः ।

१. मार्जारः मूषकं गृह्णीयात् । ......... मूषकं ......... ।
२. छात्रः कोलाहलं न कुर्यात् । ......... कोलाहलं न ........ ।
३. सा फलानि दद्यात् । ......... फलानि ......... ।
४. चोरः वस्तूनि अपहरेत् । ......... वस्तूनि ......... ।
५. कर्मकरः वस्तूनि आनयेत् । ......... वस्तूनि ......... ।
६. मम मित्रम् आगच्छेत् । मम ......... ......... ।
७. छात्रः श्लोकं वदेत् । ......... श्लोकं ......... ।
८. अध्यापकः पाठान् पाठयेत् । ......... पाठान् ......... ।

९. भक्तः देवं वन्देत । ......... देवं ......... ।

१०. बालकः मधुराणि खादेत् । ......... मधुराणि ......... ।

(Answers on PNo - 234)

## २. व्यावहारिकशब्दावली शरीरावयवाः (विशिष्टाः)

पुंलिङ्गशब्दाः

अङ्गुष्ठः - Thumb मणिबन्धः - Wrist मूर्धा - Head

स्त्रीलिङ्गशब्दाः

अनामिका - Ring finger
मध्यमा - Middle finger
तर्जनी - Index finger
कनिष्ठिका - Little finger
कनीनिका - Pupil of the eye
मज्जा - Bone - marrow
सिरा - Nerve/vein/artery
कटिः - Waist
दन्तपाली - Gum (of the teeth)
भ्रूः - Eye brow
कफोणिः - Elbow
नाडी - Artery/Vein in the body

नपुंसकलिङ्गशब्दाः

चिबुकम् - Chin
करतलम् - Palm
कशेरुकम् - Spinal column
अन्त्रम् - Intestine
तालु - Palate
श्मश्रु - Beard/moustache
पक्ष्म - Eyelash
रोम - Body-hair
शिरः - Head
मेदः - Fat

## ३. चाटुश्लोकः

Accompanied by Sītā and Lakṣmaṇa Sri Rāma went to the forest. Guha took him across the Ganges. He had heard of the greatness of the dust from the feet of Sri Rāma that had restored the human form of Ahalyā. When Sri Rāma was about to board the vessel, Guha said -

क्षालयामि तव पादपङ्कजं नाथ ! दारुदृषदोः किमन्तरम् ।
मानुषीकरणचूर्णमस्ति ते पादयोरिति कथा प्रथीयसी ।।

"O' Lord ! Let me wash your lotus-feet. What is the difference

between wood and stone ? The story that there is a powder in your feet that can transform anything into a human form, is well known". Guha is afraid that the boat too would turn into a woman and he would lose his only source of livelihood.

## ४. समस्या

एकोना विंशतिः स्त्रीणां स्नानार्थं सरयूं गता ।
विंशतिः पुनरायाता एको व्याघ्रेण भक्षितः ।।

The apparent meaning of the above stanza is - "Nineteen women went to Sarayu to bathe. Twenty women returned although one man was eaten by a tiger". Nineteen women went though twenty returned. Besides, one man was eaten by a tiger ! How can this be ? Here the riddle with regard to number is to be solved. Would you try ?

(Answer on PNO - 79)

## ५. सुभाषितम्

स्वभावं न जहात्येव साधुरापद्गतोऽपि सन् ।
कर्पूरः पावकस्पृष्टः सौरभं लभतेतराम् ।।७।।

**पदविभागः** – स्वभावम्, न, जहाति, एव, साधुः, आपद्गतः, अपि, सन्, कर्पूरः, पावकस्पृष्टः, सौरभम्, लभतेतराम् ।

**अन्वयार्थः** - कर्पूरः – Camphor, पावकस्पृष्टः – that is burnt (literally touched by fire), सौरभं लभतेतराम् – gives out more fragrance. साधुः – A pious man, आपद्गतः सन् अपि – even in diffculty, स्वभावम् न जहाति एव – does not give up his nature.

**तात्पर्यम्** - A Pious man's good nature does not change even in times of adversity. When camphor is burnt instead of losing its quality of giving out fragrance it emits more of it.

गुणेषु क्रियतां यत्नः किमाटोपैः प्रयोजनम् ।
विक्रीयन्ते न घण्टाभिर्गावः क्षीरविवर्जिताः ।।८।।

**पदविभागः** - गुणेषु, क्रियताम्, यत्नः, किम्, आटोपैः, प्रयोजनम्,

विक्रीयन्ते, न, घण्टाभिः, गावः, क्षीरविवर्जिताः ।

**अन्वयार्थः** - गुणेषु - To acquire good qualities, यत्नः क्रियताम् - efforts must be made. आटोपैः - By putting on a show, किं प्रयोजनम् - what is the use ? गावः - Cows, क्षीरविवर्जिताः - that do not give milk, घण्टाभिः न विक्रीयन्ते - cannot be sold with just bells.

**तात्पर्यम्** - In this world virtue is respected. External appendages do not enhance the worth of a person. For example, a cow is valued for the milk it gives and not for the bell that is tied to her neck. A person who is buying the cow wants to know how much milk she gives and not how much the bell tied to her neck is worth.

## ६. पदसङ्ग्रहः

**स्था** - to stand

१. तिष्ठति २. स्थीयते ३. स्थास्यति
४. स्थातव्यम् - स्थानीयम्, ५. स्थितः - स्थिता - स्थितम्,
६. स्थितवान् - स्थितवती ७. तिष्ठन् - तिष्ठन्ती ८. स्थित्वा - आस्थाय (प्रस्थाय = having started) ९. स्थातुम् ।

**क्षाल्** - to wash

१. क्षालयति २. क्षाल्यते ३. क्षालयिष्यति
४. क्षालयितव्यम् - क्षालनीयम् ५. क्षालितः - क्षालिता - क्षालितम्
६. क्षालितवान् - क्षालितवती ७. क्षालयन् - क्षालयन्ती
८. क्षालयित्वा - प्रक्षाल्य ९. क्षालयितुम् ।

**लिख्** - to write

१. लिखति २. लिख्यते ३. लेखिष्यति
४. लेखितव्यम् - लेखनीयम् ५. लिखितः - लिखिता - लिखितम्
६. लिखितवान् - लिखितवती ७. लिखन् - लिखन्ती / लिखती
८. लिखित्वा - विलिख्य ९. लेखितुम् ।

**नृत्** - to dance

१. नृत्यति २. नृत्यते ३. नर्तिष्यति
४. नर्तितव्यम् - नर्तनीयम् ५. नर्तितः - नर्तिता - नर्तितम् ६. नर्तितवान्

- नर्तितवती ७. नृत्यन् - नृत्यन्ती ८. नर्तित्वा - परिनृत्य ९. नर्तितुम् ।

**पच्** - to cook

१. पचति २. पच्यते ३. पक्ष्यति

४. पक्तव्यम् - पचनीयम् ५. पक्वः - पक्वा - पक्वम् ६. पक्ववान् - पक्ववती ७. पचन् - पचन्ती ८. पक्त्वा - परिपच्य ९. पक्तुम् ।

**वन्द्** - to salute

१. वन्दते २. वन्द्यते ३. वन्दिष्यते

४. वन्दितव्यम् - वन्दनीयम् ५. वन्दितः - वन्दिता - वन्दितम्

६. वन्दितवान् - वन्दितवती ७. *वन्दमानः - वन्दमाना ८. वन्दित्वा - अभिवन्द्य ९. वन्दितुम् ।

* 'वन्दते' is आत्मनेपदी and hence the form वन्दमानः

## ७. काव्यकथा

### रघुदेवेन्द्रयोः युद्धम्

बालकः रघुः दिने दिने प्रवृद्धः । सः योग्यं शिक्षणम् अपि प्राप्तवान् । तस्य विवाहः अपि सम्पन्नः । दिलीपः राज्यभारं लघुं कर्तुम् अपेक्षितवान् । अतः सः रघुकुमारस्य पट्टाभिषेकं कृतवान् । ततः शतम् अश्वमेधयागान् कर्तुं सङ्कल्पितवान् । शतेन अश्वमेधैः देवेन्द्रपदवी लभ्यते । दिलीपेन अश्वमेधयागाय यागाश्वः प्रेषिताः । अश्वानां रक्षणाय रघुः गतः । एकोनशतं (९९) यागाः निर्विघ्नाः जाताः । अन्तिमस्य यागस्य अश्वः प्रेषितः । धनुर्धराः रक्षकाः आसन् । परन्तु देवेन्द्रः तत्र आगतः । सः गुप्तशरीरं धृतवान् । अश्वम् अपहृतवान् । रघुराजस्य सैन्यम् आश्चर्यचकितम् अभवत् । किं कर्तव्यम् इति न ज्ञातम् ।

तदा तत्र वसिष्ठस्य नन्दिनीधेनुः आगतवती । सा अनुग्रहं कृतवती । तेन पूर्वदिशायाम् इन्द्रः दृष्टः । रघुः इन्द्रम् उद्दिश्य अवदत् - ''देवेन्द्र ! त्वं देवेषु प्रथमः । अश्वस्य अपहरणं हीनं कार्यम् । इदं त्वया न कर्तव्यम् । तव अपकीर्तिः भवति । अश्वं त्यज'' इति ।

इन्द्रः रघुं दृष्ट्वा - ''राजकुमार ! कीर्तिः एव मुख्या । अहम् एकः

'शतक्रतुः' इति प्रसिद्धः । अन्यः शतक्रतुः लोके नास्ति । यदि तव जनकः शतम् अश्वमेधान् करोति तर्हि सः शतक्रतुः भवति । अतः अहम् अश्वम् अपहृतवान्'' इति अकथयत् ।

रघुः इदं वचनं श्रुत्वा - ''यदि आग्रहः शस्त्रं गृह्यताम्'' इति अवदत् । रघुदेवेन्द्रयोः भीकरं युद्धं जातम् । रघुः बाणं गृहीतवान् । क्षिप्तवान् च । इन्द्रस्य भुजे चिह्नं जातम् । इन्द्रः कुपितवान् । वज्रायुधेन रघुं ताडितवान् । रघुः भूमौ पतितवान्, क्षणे एव उत्थितवान् च ।

रघुकुमारस्य पराक्रमेण इन्द्रः सन्तुष्टवान् । इन्द्रः - ''वरं पृच्छ, अश्वं तु न ददामि'' इति अकथयत् । रघुः - ''अश्वं विना अपि यागः पूर्णः भवतु, यागफलं च भवतु'' इति प्रार्थितवान् । इन्द्रः 'तथास्तु' इति वरं दत्तवान् । सन्तुष्टः रघुः राजधानीं प्रत्यागतवान् ।

## Raghu's fight with Devendra

The boy Raghu grew up day by day. He received proper education also. His marriage also took place. Dilīpa thought of lessening his own burden of administration of the kingdom. Hence he crowned the prince Raghu. Then he proposed to perform a hundred horse-sacrifices. Devendra's position can be got by the performance of a hundred Horse-sacrifices. Dilīpa sent the sacrificial horses to the Horse-sacrifice. Raghu went to guard the horses. Ninety-nine sacrifices were performed without a hitch. The horse of the last sacrifice was sent around. Men armed with bows were on guard. But Devendra came. He took an invisible form. He stole the horse. Raghu's army was wonder-struck. They did not know what to do.

At that time Vasiṣtha's cow Nandinī came there. She did a favour. Due to that Indra was seen in the eastern quarter. Raghu said to Indra: 'Devendra! You are the foremost among gods. Stealing the horse is an evil deed. You should not do it. You will get a bad name. Leave the horse'.

Indra saw Raghu and said - Prince! Fame alone is important. I

am the only one known as 'Śatakratu' (One who has performed a hundred sacrifices). There is no other 'Śatakratu' in the world. Your father will become 'Śatakratu' if he completes a hundred horse sacrifices. Hence, I have stolen the horse'.

Raghu having heard this, said- 'If you are this stubborn pick up your weapon. (i.e., get ready for a battle). There ensued a terrible fight between Raghu and Indra. Raghu took up his arrow and let go. It left a mark on Indra's arm. Indra got angry. He struck Raghu with his thunder bolt. Raghu fell to the ground and sprang up the very next moment.

Indra was pleased with Raghu's valour. Indra said- 'Ask for a boon. However, I shall not return the horse.' Raghu asked- 'Let the sacrifice be completed even without the horse. Let the fruit of the sacrifice be got'. Indra granted the boon saying, ' So be it.' Being pleased, Raghu returned to his capital.

**एतेषाम् उत्तरं लिखत ।**

१. दिलीपः किं कर्तुम् अपेक्षितवान् ?
२. इन्द्रः कस्याः अनुग्रहेण दृष्टः ?
३. इन्द्रम् उद्दिश्य रघुराजस्य वचनं किम् ?
४. इन्द्रः कं वरं दत्तवान् ? **(Answers on PNo - 234)**

## ८. अन्वयक्रमः

तं व्रजन्तं प्रियो भ्राता लक्ष्मणोऽनुजगाम ह ।
स्नेहाद्विनयसम्पन्नः सुमित्रानन्दवर्धनः ।।

**पदविभागः** - तम्, व्रजन्तम्, प्रियः, भ्राता, लक्ष्मणः, अनुजगाम, ह, स्नेहात्, विनयसम्पन्नः, सुमित्रानन्दवर्धनः ।

**अन्वयः** - विनयसम्पन्नः सुमित्रानन्दवर्धनः प्रियः भ्राता लक्ष्मणः स्नेहात् तं व्रजन्तम् अनुजगाम ।

**प्रतिपदार्थः** - प्रियः भ्राता - (His) dear brother, लक्ष्मणः - Lakṣmaṇa, विनयसम्पन्नः - who was humble, सुमित्रानन्दवर्धनः - who

enhanced the joy of Sumitra, स्नेहात् - out of affection, अनुजगाम - accompanied, तं व्रजन्तम् - him (Rama, who was going (to the forest).

**तात्पर्यम्** - Sumitra's son Lakṣmaṇa was Rāma's favourite younger brother and the joy of his own mother. He was humility incarnate. When Rāma was leaving for the forest he could not bear the thought of himself continuing to stay in the palace. He had to be with his dear brother wherever he was. So, he too prepared to accompany him. Kaikeyi's desire was to send only Rāma and not Lakṣmaṇa. But Lakṣmaṇa showed his fraternal affection by accompanying Rāma.

रामस्य दयिता भार्या नित्यं प्राणसमा हिता ।
सीताप्यनुगता रामं शशिनं रोहिणी यथा ।।

**पदविभागः** - रामस्य, दयिता, भार्या, नित्यम्, प्राणसमा, हिता, सीता, अपि, अनुगता, रामम्, शशिनम्, रोहिणी, यथा ।

**अन्वयः** - रामस्य दयिता नित्यं प्राणसमा हिता भार्या सीता अपि शशिनं रोहिणी यथा (तथा) रामम् अनुगता ।

**प्रतिपदार्थः** - रामस्य - Rāma's, दयिता भार्या - beloved wife, सीता - Sita, नित्यं प्राणसमा - who was always dear to him like his own life, हिता - and was his well-wisher, अपि - also, अनुगता - followed, रामम् - Rāma, यथा (तथा) - just like, रोहिणी - (the star) Rohiṇi, शशिनम् - ( following) the moon.

**तात्पर्यम्** - Rāma's love for Sīta was boundless. She was his very life breath. Sīta, on her part, wished well for her husband always. Such being their conjugal love, Sīta could not remain in the kingdom without her husband. Rohiṇi is Chandra's wife. She dutifully follows him. Similarly Sīta went with Rāma. The comforts of life in the palace did not hold her back. Nor did the painful life in the forest scare her. She only thought that her place was beside Rama wherever he was. There was no other thought in her mind.

# पदविभागनियमः

In the lessons so far, you have come across **पदविभाग** in the slokas that were taught. Words are joined with one another due to several factors.

1. A word ending in a consonant joins with the following word that commences with a vowel.

   Eg. - गृहम् आगच्छत् = गृहमागच्छत्
   वाक्यम् उक्त्वा = वाक्यमुक्त्वा
   तद् इति = त**दि**ति

   In the examples above the first word ends with a consonant(व्यञ्जनान्तम्). ( म् and द् are consonants without a vowel) The second word has a vowel in the beginning(स्वरादि). When the two words are joined म् + आ has become मा and द् + इ = दि ।

2. Words are joined according to विसर्गसन्धि. Sometimes विसर्ग changes into 'र' sometimes into 'स' and some other times as 'ओ' । There are places where विसर्ग disappears also (लोपः). See the examples below and note these changes in विसर्ग ।

   1. विसर्ग replaced by 'रेफ' - सवितुः + इदम् = सवितु**रि**दम् ।
   2. विसर्ग replaced by 'सकार' - भवन्तः + सर्वे = भवन्त**स्स**र्वे ।
   3. विसर्ग replaced by 'ओकार' - रामः + वन्दते = रा**मो** वन्दते ।
   4. विसर्ग disappearing (लोपः) - देवाः + इति = दे**वा** इति ।

   In the next level you will learn विसर्गसन्धि in detail. For now, to be able to do पदविभाग, the above explanation is sufficient.

3. Words are joined according to other Sandhi rules also.

   - तस्य + अयम् - त**स्या**यम् (सवर्णदीर्घसन्धिः)
   - तस्य + इदम् - त**स्ये**दम् (गुणसन्धिः)
   - तस्य + एतत् - त**स्यै**तत् (वृद्धिसन्धिः)
   - देवौ + आगतौ - दे**वावा**गतौ (यान्तवान्तादेशसन्धिः)
   - सर्वे + अपि - स**र्वेऽ**पि (पूर्वरूपसन्धिः)

## अभ्यासः

Keeping the above rules in mind split up the words below.

I. उदा - एवमुक्त्वा = एवम्, उक्त्वा

१. तमवदत् = ---, ---- २. एतमुपायम् = ---, ----
३. सत्यमिति = ---, --- ४. उपायमाकलय्य = --, ---
५. अहमेतत् = ---, --- ६. अङ्गीकृतमासीत् = ---,---
७. अनुज्ञामपि = ---, ---८. शब्दानामेव = ---, ---
९.कार्यमेकम् = ---,---१०. आयोजितमासीत् = ---, ---

II. उदा - रामस्तत्र = रामः, तत्र

१. इन्द्रो वार्ताम् = ---, ---२. अतस्तासाम् = ---, ----
३. स इच्छति = ---, ----४. प्रायस्ते = ---, ----
५. मुनेर्दर्शनेन = ---, ----६. अर्जुनस्तत्र = ---, ----
७. तैरप्रमत्तः = ---, --- ८. समृद्धा अभवन् = ---, ---
९. शिशुपालो मृतः = ---, -- १०. खेदो न = ---, ---

III. उदा - तत्रैव - तत्र, एव

१. नैकविधाः = ---, ----२. इत्युक्त्वा = ---, ----
३. आत्मनाहम् = ---, ----४. अपृष्ट्वैव = ---, ----
५. इतोऽप्यधिकानि = ---, ----६. मृतस्यैव = ---, ----
७. अत्याग्रहिणः = ---,---- ८. पद्धत्यनुगुणम् = ---, ----
९. विद्योदयः = ---,---- १०. विशेषाङ्कान् = ---, ----

---

**उत्तराणि**

I. १. तम्, अवदत् २. एतम्, उपायम् ३. सत्यम्, इति ४. उपायम्, आकलय्य ५. अहम्, एतत् ६. अङ्गीकृतम्, आसीत् ७. अनुज्ञाम्, अपि ८. शब्दानाम्, एव ९. कार्यम्, एकम् १०. आयोजितम्, आसीत् ।

II. १. इन्द्रः, वार्ताम् २. अतः, तासाम् ३. सः, इच्छति ४. प्रायः, ते ५. मुनेः, दर्शनेन ६. अर्जुनः, तत्र ७. तैः, अप्रमत्तः ८. समृद्धाः, अभवन् ९. शिशुपालः, मृतः १०. खेदः, न ।

III. १. न, एकविधाः २. इति, उक्त्वा ३. आत्मना, अहम् ४. अपृष्ट्वा, एव ५. इतोऽपि, अधिकानि ६. मृतस्य, एव ७. अति, आग्रहिणः ८. पद्धति, अनुगुणम् ९. विद्या, उदयः १०. विशेष, अङ्कान् ।

## १. अनुवादपद्धतिः

Translation does not merely consist in putting a few sentences together from one language to another. Translation of ideas constantly takes place in our minds when we are writing independently or talking. We think in our mother-tongue and mentally translate the idea into the other language before writing it down. It is only right and proper that we resort to simple language in translation, to begin with.

In Samskrit verbs pose some difficulty in translation. Since our vocabulary of verbs is lacking it is but natural that we find it difficult. In such a situation it is better to split verbs.

Eg - अधीते - अध्ययनं करोति ।
निद्राति - निद्रां करोति ।
विक्रीणीते - विक्रयणं करोति ।
भुङ्क्ते - भोजनं करोति ।
छिनत्ति - छेदनं करोति ।

By using अध्ययनं करोति instead of अधीते the same idea is conveyed. Although almost all verbs can thus be split simple verbs need not be split. Where the use of the verbal forms is difficult and complicated, this kind of splitting is advisable.

However, care should be taken in doing so because the object gets accusative case when the actual or direct verb is used and gets possessive case when the verb is split up. Observe the following examples -

पुस्तकम् अधीते । (studies) पुस्तकस्य अध्ययनं करोति ।
लेखनीं विक्रीणीते । (sells) लेखन्याः विक्रयणं करोति ।
वृक्षं छिनत्ति । (cuts) वृक्षस्य छेदनं करोति ।
हस्तम् उपयुङ्क्ते । (uses) हस्तस्य उपयोगं करोति ।
द्वारं पिधत्ते । (Shuts) द्वारस्य पिधानं करोति ।

However, intransitive verbs like निद्राति and प्रयतते do not have an object. So, the question of changing the object into षष्ठीविभक्ति

does not arise. When split up निद्राम् and प्रयत्नम् take the accusative case because they are the object of the verb करोति in निद्रां करोति and प्रयत्नं करोति ।

(अ) Translate the following sentences into English.

१. बालकः अङ्गुल्या गणनां करोति । (अङ्गुल्या - with the finger)
२. सा वस्त्रप्रक्षालनं करोति ।
३. शिशुः सर्वदा निद्रां करोति ।
४. बालाः अङ्कन्याः उपयोगं कुर्वन्ति ।
५. विमर्शकः काव्यस्य परिशीलनं करोति ।

(आ) Translate the following sentences into Samskrit.

1. I translate sentences.
2. The Student writes the answer to the question.
3. When does the programme begin?
4. The Minister delivers the speech.
5. Let us practice Samskrit. (Let us do - करवाम)

## १०. सन्धिः
## वृद्धि सन्धिः

Study the following Examples.

१. सः **तत्रैव** उपविशति ।
२. संस्कृतभाषा **नैव** क्लिष्टा, न च कठिना ।
३. राजा **अष्टैश्वर्ययुतः** आसीत् ।
४. गङ्गाजलं **दिव्यौषधम्** अस्ति ।
५. वैद्यः **वनौषधिं** चिनोति ।

Let us analyse the Euphonic combination in the bold words above.

---

(अ) 1. The boy counts with the finger(s). 2. She washes clothes. 3. The baby sleeps always. 4. Children use pencils. 5.The critic examines the literary work.

(आ) १. अहं वाक्यानाम् अनुवादं करोमि । २. विद्यार्थी प्रश्नस्य उत्तरं लिखति । ३. कार्यक्रमस्य आरम्भः कदा भवति ? ४. मन्त्री भाषणं करोति । ५. वयं संस्कृतस्य अभ्यासं करवाम ।

१. तत्रैव = तत्र + एव (अ + ए = ऐ)
२. नैव = न + एव (अ + ए = ऐ)
३. अष्टैश्वर्ययुतः = अष्ट + ऐश्वर्ययुतः (अ + ऐ = ऐ)
४. दिव्यौषधम् = दिव्य + औषधम् (अ + औ = औ)
५. वनौषधिः = वन + ओषधिः (अ + ओ = औ)

As shown in the above examples when the vowels अ and आ are followed by ए, ऐ the vowel ऐ replaces both and when followed by ओ, औ the vowel औ takes the place of both. This S is called वृद्धिसन्धिः ।

The following examples conform to the above rule.

१. एक + एकम् = एकैकम्
२. च + एनम् = चैनम्
३. राजा + ऐश्वर्यम् = राजैश्वर्यम्
४. गङ्गा + ओघः = गङ्गौघः
५. तव + औदार्यम् = तवौदार्यम्

## अभ्यासः

**I.** Join the following words.

१. सदा + एव २. महा + ऐश्वर्यम् ३. तस्य + ओदनम्
४. राष्ट्र + ऐक्यम् ५. परम + औचित्यम् ६. तत्र + एकदा
७. नव + औषधम् ८. महा + औत्सुक्यम् ९. तथा + एव

**II.** Split the Sandhis given below.

१. यदैव २. चैतत् ३. नैनम् ४. पश्यैतान्
५. एकस्यैव ६. रामौत्कण्ठ्यम् ७. महौजस्कः ८. पक्वौदनम्
९. रक्तौषधम् १०. जनैक्यम्

**(Answers on PNo - 234)**

## ११. सङ्ग्राह्यविषयाः

**Famous fives**

पञ्चामृतम् - क्षीरम्, दधि, घृतम्, मधु, शर्करा
पञ्च कोशाः - अन्नमयः, प्राणमयः, मनोमयः, विज्ञानमयः, आनन्दमयः
पञ्च गव्यानि - क्षीरम्, दधि, घृतं, गोमूत्रं, गोमयम्
पञ्च नदाः - शतद्रुः, विपाशा, इरावती, चन्द्रभागा, वितस्ता
पञ्च प्राणाः - प्राणः, अपानः, व्यानः, उदानः, समानः
पञ्च देववृक्षाः - मन्दारः, पारिजातः, सन्तानः, कल्पवृक्षः, हरिचन्दनः

**Tradition**

**येन बद्धो बली राजा दानवेन्द्रो महाबलः ।**
**तेन त्वामनुबध्नामि रक्षे मामव मामव ।।**

The above sloka is to be recited when an amulet is tied. In the past the mighty ruler Bali was captured by it. I am tying the same to you, "O" Raksha ! "Protect me', 'protect me'.

**Answer to the Riddle**

एकोना विंशतिः - means one less than twenty i.e., nineteen. But the word एकोना has to be split up as एकः 'ना' । Now it means 'one man' and विंशतिः स्त्रीणाम् - twenty women. The man was eaten by a tiger and the twenty women returned.

# परिचयः - चतुर्थः पाठः

## प्रश्नाः

I. Write the word-to-word meaning of the following stanza.

उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः ।
न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगाः ।

(Jobs are accomplished only through efforts and not by merely wishing that things happen. After all, animals do not enter the mouth of a lion.)

II. Answer the following questions in Samskrit.

१. केषु यत्नः करणीयः ?
२. काः न विक्रीयन्ते ?
३. कः स्वभावं न जहाति ?
४. कीदृशः कः सौरभं लभतेतराम् ?
५. रामस्य पादयोः कीदृशं चूर्णम् अस्ति ?
६. शशिनं का अनुगच्छति ?

III. Translate into Samskrit.

1. Maternal uncle might come to our house.
2. Plenty of water might flow in the river.
3. Thief might steal the money.
4. God may give a boon.
5. We shall buy the things.

(**Note:** Answers for the above exercises are given in the end of this book PNo - 234. After completing the exercises check your answers.)

# परिचयः - पञ्चमः पाठः

बहुविघ्नास्तु सदा कल्याणसिद्धयः ।

There are always many obstacles to the fulfilment of good deeds.

- *Kathāsaritsāgara*

## १. भाषाभ्यासः

### कर्मणिप्रयोगः - वर्तमानकालः

**I.** Read the following sentences carefully.

१. बालकेन **पठ्यते** । = It is read by a boy.
२. जनकेन **गम्यते** । = It is gone by the father.
३. सीतया **लिख्यते** । = It is written by Sīta.
४. देवक्या **सूच्यते** । = It is indicated by Devaki.
५. मित्रेण **खाद्यते** । = It is eaten by a friend.
६. तया **ताड्यते** । = It is beaten by her.
७. शिक्षकेण **प्रेष्यते** । = It is sent by the teacher.
८. रजकेन **क्षाल्यते** । = It is washed by the washerman.
९. मया **सह्यते** । = It is tolerated by me.
१०. भक्तेन **वन्द्यते** । = (God) is saluted by a devotee.

In the sentences above 'It' denotes an unspecified object(कर्मपदम्).

In this lesson you are going to learn the use of Passive voice. The above sentences are in Passive voice and Present tense.

Usually, the verbal form in passive is as follows.

धातुः + य + ते

Eg - पठ् + य + ते - पठ्यते

The active form of 'पठ्' in present tense is पठति and the passive from of the same is पठ्यते ।

Some more examples of passive verbs in present tense are as follows.

लिख् + य + ते - लिख्यते
खाद् + य + ते - खाद्यते
गम् + य + ते - गम्यते

## रूपाभ्यासः

Write the passive third person singular form (कर्मणि - प्रथमपुरुष - एकवचनान्तं रूपम्) of the following.

Eg - खादति - खाद्यते

१. त्यजति —— २. भक्षयति —— ३. नमति ——
४. पृच्छति —— ५. स्मरति —— ६. निन्दति ——
७. रक्षति —— ८. पचति —— ९. मारयति ——
१०. स्थापयति ——

Some roots undergo change when conjugated in active voice. Hence if you know the roots (धातुः) of these verbs it will be easy for you to know their passive forms as in the following examples.

i. पश्यति (दृश्धातुः) दृश् + य + ते - दृश्यते ।
जानाति (ज्ञाधातुः) ज्ञा + य + ते - ज्ञायते ।
नयति (नीधातुः) नी + य + ते - नीयते ।
ददाति (दाधातुः) दी + य + ते - दीयते ।

ii. यच्छति - दीयते अस्ति - भूयते गायति - गीयते
इच्छति - इष्यते रोदिति - रुद्यते धरति - ध्रियते

१. त्यज्यते २. भक्ष्यते ३. नम्यते ४. पृच्छ्यते ५. स्मर्यते ६. निन्द्यते ७. रक्ष्यते ८. पच्यते ९. मार्यते १०. स्थाप्यते

गृह्णाति - गृह्यते    शृणोति - श्रूयते    जयति - जीयते

पिबति - पीयते

Atmanepadi roots also change in the same manner from active to passive.

Eg - वन्दते (वन्द्धातुः)
वन्द् + य + ते - वन्द्यते
कम्प् + य + ते - कम्प्यते

Passive form's of some आत्मनेपदी roots.

| | | |
|---|---|---|
| ऊहते - ऊह्यते | ग्रसते - ग्रस्यते | भाषते - भाष्यते |
| याचते - याच्यते | अपेक्षते - अपेक्ष्यते | उपयुङ्क्ते - उपयुज्यते |
| भर्त्सयते - भर्त्स्यते | लङ्घते - लङ्घ्यते | सेवते - सेव्यते |
| क्षमते - क्षम्यते | ईक्षते - ईक्ष्यते | श्लाघते - श्लाघ्यते |
| शङ्कते - शङ्क्यते | | |

In the lessons of प्रवेश you have learnt the rules of कर्तरि प्रयोग/ Active voice. Let us now examine the rules concerning Passive voice.

१. छात्रेण श्लोकः **पठ्यते** । = A stanza is read/recited by a student.

२. गणेशेन मोदकं **खाद्यते** । = Sweet is eaten by Gaṇeśa.

३. निर्वाहकेण चिटिका **दीयते** । = Ticket is issued by the conductor.

४. अर्चकेण पुष्पाणि **अर्प्यन्ते** । = Flowers are offered by the priest.

५. तेन देवाः **नम्यन्ते** । = Gods are saluted by him.

६. महिलया शाटिकाः **क्षाल्यन्ते** । = Sarees are washed by the woman.

७. अस्माभिः फलं **खाद्यते** । = Fruit is eaten by us.

८. छात्रैः कोलाहलः **क्रियते** । = Noise is made by students.

९. मया गृहपाठाः **लिख्यन्ते** ।= Home assignments are done by me.

१०. भवता लेखन्यः **नीयन्ते** । = Pens are taken by you.

११. दरिद्रेण कष्टं **सह्यते** । = Difficulty is borne by a poor man.

१२. तेन मित्रं **भर्त्स्यते** । = A friend is threatened / abused by him.

१३. शिक्षकेण कार्यक्रमाः **ईक्ष्यन्ते** । = Programmes are watched by the teacher.

१४. जनकेन पुत्रः **श्लाघ्यते** । = Son is praised by the father.

१५. भगिन्या अनुजः **क्षम्यते** । = Younger brother is forgiven by the sister.

The above sentences are in Passive voice.

**The rules for Passive voice** (कर्मणिप्रयोगस्य नियमाः)

1. In Passive voice the object (कर्मपदम्) is predominant.

2. कर्तृपदम् is in तृतीया विभक्तिः ।

उदा - १. **छात्रेण** श्लोकः पठ्यते ।२. **तया** प्रश्नः पृच्छ्यते ।
३. **अस्माभिः** घटी दृश्यते ।४. **कर्मकरैः** कार्याणि क्रियन्ते ।

3. If the कर्मपदम् is mentioned in the sentence it should be in प्रथमाविभक्तिः ।

उदा - १. भवत्या **कार्यक्रमः** दृश्यते ।२. बालकेन **रोटिका** खाद्यते ।
३. मया **देवाः** पूज्यन्ते । ४. चालकेन **वाहनं** चाल्यते ।

4. The verb will be according to the कर्मपदम् ।

१. शिष्येण प्रश्नः पृच्छ्यते ।

२. शिष्येण प्रश्नाः पृच्छ्यन्ते ।

३. शिष्यैः प्रश्नः पृच्छ्यते ।

In the above examples शिष्यः is the कर्तृपदम्, प्रश्नः is the कर्मपदम् and पृच्छ्यते is the क्रियापदम्. In the first sentence कर्मपदम् (प्रश्नः) is

in एकवचनम् and hence the क्रियापदम् is also in एकवचनम् 'पृच्छ्यते'. In the second sentence the कर्मपदम् 'प्रश्नाः' is in plural (बहुवचनम्) and hence the क्रियापदम् is in plural as 'पृच्छ्यन्ते' । In the third sentence the कर्तृपदम् 'शिष्यैः' is in plural. But since the कर्मपदम् 'प्रश्नः' is in एकवचनम् the verb is in singular only as 'पृच्छ्यते' ।

Summing up the above, the following are the rules of कर्मणिप्रयोगः ।

1. In passive voice the verbal form will change only if the कर्मपदम् changes and not if the कर्तृपदम् changes.
2. Here the क्रियापद is always in आत्मनेपदी and not परस्मैपदी (Even a परस्मैपदी root changes into आत्मनेपदी in the passive) Before ते there is 'य' as shown in the examples. (पठ् + य + ते)
   उदा - पच्यते, खाद्यते, वन्द्यते etc.,
3. Rarely do we come across a passive sentence where the कर्मपद is either in मध्यमपुरुष or उत्तमपुरुष ।
4. Generally for any root the passive form is got by adding य and ते । उदा - पठति - पठ्यते

   More examples are given earlier. Read them again.

The passive forms of verbs should be conjugated like any आत्मनेपदी verb eg. वन्दते, वन्देते, वन्दन्ते. Given below are the passive forms of पठ् धातुः । Conjugate other roots similarly.

| | | |
|---|---|---|
| पठ्यते | पठ्येते | पठ्यन्ते |
| पठ्यसे | पठ्येथे | पठ्यध्वे |
| पठ्ये | पठ्यावहे | पठ्यामहे |

To understand the difference between कर्तरिप्रयोग and कर्मणिप्रयोग study the following sentences carefully.

| कर्तरिप्रयोगः | कर्मणिप्रयोगः |
|---|---|
| रामः[1] पाठं[2] लिखति[3] । | रामेण[1] पाठः[2] लिख्यते[3] । |
| 1. Subject - Nominative case. | 1. Subject - Instrumental case. |
| 2. Object - Accusative case. | 2. Object - Nominative case. |
| 3. Verb follows the subject. | 3. Verb follows the object. |
| ☛ The Verb does not change when there is change in the object. | ☛ Change does not occur in the verb when the subject changes. |
| ☛ The Verb is in the same number as the subject. | ☛ The Verb is in the same number as the object. |

## अभ्यासः

I. Write the other numbers of the passive verbs given below.

उदा - लिख्यते <u>लिख्येते</u> <u>लिख्यन्ते</u>

१. गम्यते .............. .............. ।

२. .............. ध्रियेते .............. ।

३. .............. .............. क्रियन्ते ।

४. ज्ञायते .............. .............. ।

५. .............. दीयेते .............. ।

६. त्यज्यते .............. .............. ।

७. पठ्यते .............. .............. ।

८. .............. .............. दृश्यन्ते ।

९. .............. स्थाप्येते .............. ।

१०. .............. .............. निन्द्यन्ते ।

II. Write all the forms of the following passive verbs.

क्रियते वन्द्यते गम्यते ईक्ष्यते

III. Write the passive forms of verbs as shown in the example.

उदा - गच्छति - गम्यते

| | | | |
|---|---|---|---|
| १. लिखति | -------- | २. जिघ्रति | -------- |
| ३. पचति | -------- | ४. नयति | -------- |
| ५. पिबति | -------- | ६. पश्यति | -------- |
| ७. यच्छति | -------- | ८. शृणोति | -------- |
| ९. जानाति | -------- | १०. सूचयति | -------- |

IV. Change the voice from active to passive.

उदा - सः नयति । - तेन नीयते ।

| | |
|---|---|
| १. सा निन्दति । | ५. रजकः क्षालयति । |
| २. भवती जानाति । | ६. भक्तः वन्दते । |
| ३. गायकः गायति । | ७. बालकः खादति । |
| ४. सुरेशः गच्छति । | ८. शिष्यः पिबति । |

V. Change the following sentences from passive to active.

| | |
|---|---|
| १. मया कार्यं क्रियते । | २. तया फलं खाद्यते । |
| ३. सेवकेन सञ्चिकाः नीयन्ते । | ४. छात्रेण गृहपाठाः लिख्यन्ते । |
| ५. दरिद्रैः कष्टं सह्यते । | ६. तैः कार्यक्रमाः ईक्ष्यन्ते । |
| ७. भिक्षुक्या धनं याच्यते । | ८. बालेन घट्यः दृश्यन्ते । |
| ९. ताभिः पुष्पाणि घ्रायन्ते । | १०. गायकैः गीतानि गीयन्ते । |

VI. Change the following sentences from active to passive.

| | |
|---|---|
| १. बालकः पाठं पठति । | २. सा घटीं पश्यति । |
| ३. भक्ताः देवं वन्दन्ते । | ४. ताः जलं नयन्ति । |
| ५. वयम् उत्तरं लिखामः । | ६. अर्चकः देवान् पूजयति । |
| ७. आरक्षकः चोरान् गृह्णाति । | ८. भारतीयाः नदीः पूजयन्ति । |

९. भवती शाटिकाः क्षालयति । १०. सैनिकाः देशं रक्षन्ति ।
११. कीटः फलानि खादति । १२. मशकाः रक्तं चूषन्ति ।

(Answers on PNo - 235)

## २. व्यावहारिकशब्दावली

### वन्यजन्तवः

| | |
|---|---|
| नकुलः - Mongoose | हरिणः - Deer |
| शृगालः - Jackal | वृकः - Wolf |
| सिंहः - Lion | व्याघ्रः - Tiger |
| तरक्षुः/तर्क्षुः - Hyena | भल्लूकः - Bear |
| उष्ट्रः - Camel | चित्रोष्ट्रः - Giraffe |
| अजगरः - Python | सूकरः - Pig |
| सर्पः - Snake | जलौकाः - Leech |
| कपिः - Monkey | चिक्रोडः - Squirrel |
| गृहगोधिका - Lizard | मकरः - Crocodile |
| कूर्मः - Tortoise | कर्कटकः - Crab |
| मण्डूकः - Frog | शल्यः - Porcupine |

## ३. चाटुश्लोकः

Once an erudite scholar went to the court of a king. The officers in the court treated him like an ordinary person. As a result of it the king also did not show any interest in him. He believed the words of his officers and ignored the scholar. Those in the royal court who knew about his erudition remained silent. The scholar noticed that men of little learning were getting the kings favour. When he came out of the palace he saw a donkey and said these words -

रे रे रासभ वस्त्रभारवहनात् कुग्रासमश्नासि किम् ?
राजाश्वावसथं प्रयाहि, चणकाभ्यूषं सुखं भक्षय ।

सर्वान् पुच्छवतो हया इति वदन्त्यत्राधिकारे स्थिताः
राजा तैरुपदिष्टमेव मनुते सत्यं, तटस्थाः परे ।।

"O donkey ! besides carrying this load of clothes why are you eating this tasteless grass ? Go to the royal horse stable where you can eat boiled gram happily. (Don't be afraid that they will drive you away !) The officers there say that all the animals with tails, are horses. (They cannot distinguish between a donkey and a horse !) The king blindly acknowledges their opinion. Those who know the truth will remain neutral and not interfere".

## ४. समस्या

अहं च त्वं च राजेन्द्र लोकनाथौ उभावपि ।
बहुव्रीहिरहं राजन् षष्ठीतत्पुरुषो भवान् ।।

A beggar says to the King, "O King ! both of us are Lokanāthas. But I am a *Bahuvrīhi* compound while you are a *Ṣaṣthi Tatpuruṣa*." Could the King understand the meaning ? Give your solution to the problem.

(Answer on PNo - 98)

## ५. सुभाषितम्

पद्माकरं दिनकरो विकचीकरोति
चन्द्रो विकासयति कैरवचक्रवालम् ।
नाभ्यर्थितो जलधरोऽपि जलं ददाति
सन्तः स्वयं परहिते निहिताभियोगाः ।।१।।

**पदविभागः** - पद्माकरम्, दिनकरः, विकचीकरोति, चन्द्रः, विकासयति, कैरवचक्रवालम्, न, अभ्यर्थितः, जलधरः, अपि, जलम्, ददाति, सन्तः, स्वयम्, परहिते, निहिताभियोगाः ।

**प्रतिपदार्थः** - दिनकरः - The Sun, विकचीकरोति - causes to bloom, पद्माकरम् - the lotus pond (ie., lotuses in a pond). चन्द्रः - The

Moon, विकासयति - causes to bloom, कैरवचक्रवालम् - a bunch of lilies. जलधरः - The cloud, न अभ्यर्थितः अपि - even when not requested, ददाति - gives, जलम् - water. सन्तः - Noble men, स्वयम् - of their own accord, निहिताभियोगाः (भवन्ति) - undertake to do something, परहिते - for the welfare of others.

**तात्पर्यम्** - The sun causes lotuses to bloom. The moon makes the lily to bloom. Clouds too, without being asked, give water. Great souls always takc thc initiativc to do good to others.

आरभन्तेऽल्पमेवाज्ञाः कामं व्यग्रा भवन्ति च ।
महारम्भाः कृतधियः तिष्ठन्ति च निराकुलाः ।।१०।।

**पदविभागः**- आरभन्ते, अल्पम्, एव, अज्ञाः, कामम्, व्यग्राः, भवन्ति, च, महारम्भाः, कृतधियः, तिष्ठन्ति, च, निराकुलाः ।

**प्रतिपदार्थः** - अज्ञाः - Fools, आरभन्ते - begin, अल्पम् एव - only a small job, कामं व्यग्राः भवन्ति च - and they become very tense. (But) महारम्भाः - (even when) they undertake great jobs, कृतधियः - wise men, निराकुलाः तिष्ठन्ति - remain unagitated.

**तात्पर्यम्** - The ignorant start only petty works and become agitated. The wise undertake great deeds with discretion and never get perturbed. We come across the former type of people everyday. They begin something without due consideration or preparation. When they face problems in their work they get upset. The latter type of people is rare to come by. Their aim is to achieve the end at any cost. Without getting perturbed unnecessarily they strive hard and reach their goal.

## ६. पदसङ्ग्रहः

**मुद्** - to feel happy, rejoice, enjoy

१. मोदते २. मुद्यते ३. मोदिष्यते
४. मोदितव्यम् - मोदनीयम्, ५. मुदितः - मुदिता - मुदितम्,
६. मुदितवान् - मुदितवती ७. मोदमानः - मोदमाना ८. मोदित्वा -

प्रमुद्य ९. मोदितुम् ।

**याच्** - to beg

१. याचते २. याच्यते ३. याचिष्यति

४. याचितव्यम् - याचनीयम् ५. याचितः - याचिता - याचितम्

६. याचितवान् - याचितवती ७. याचमानः - याचमाना ८. याचित्वा - संयाच्य ९. याचितुम् ।

**बाध्** - to torment/trouble/bother

१. बाधते २. बाध्यते ३. बाधिष्यते

४. बाधितव्यम् - बाधनीयम् ५. बाधितः - बाधिता - बाधितम्

६. बाधितवान् - बाधितवती ७. बाधमानः - बाधमाना ८. बाधित्वा - प्रबाध्य ९. बाधितुम् ।

**कम्प्** - to shiver/tremble

१. कम्पते २. कम्प्यते ३. कम्पिष्यते

४. कम्पितव्यम् - कम्पनीयम् ५. कम्पितः - कम्पिता - कम्पितम्

६. कम्पितवान् - कम्पितवती ७. कम्पमानः - कम्पमाना ८. कम्पित्वा - प्रकम्प्य ९. कम्पितुम् ।

**कथ्** - to tell

१. कथयति २. कथ्यते ३. कथयिष्यति

४. कथयितव्यम् - कथनीयम् ५. कथितः - कथिता - कथितम्

६. कथितवान् - कथितवती ७. कथयन् - कथयन्ती ८. कथयित्वा - सङ्कथय्य ९. कथयितुम् ।

## ७. काव्यकथा

### रघुमहाराजस्य त्यागः

दिलीपः वृद्धः सञ्जातः । सः भार्यया सह वनम् अगच्छत् । वानप्रस्थाश्रमं स्वीकृतवान् । रघुः सिंहासनम् आरूढवान् । ततः सः दिग्विजयं कृतवान् । सर्वान् देशान् जितवान् । दिग्विजयानन्तरं रघुः 'विश्वजिद्'यागं कृतवान् ।

तस्मिन् यागे सर्वस्वं दक्षिणा भवति । रघुमहाराजः सर्वस्य दानं कृतवान् । तस्य कोशः निःशेषः जातः ।

कौत्सः तपस्विकुमारः । सः वरतन्तुमुनेः शिष्यः । सः रघुमहाराजस्य समीपं गुरवे दानार्थं धनं प्रष्टुम् आगतवान् । रघुः मृत्तिकापात्रेण अर्घ्यं दत्तवान् । तेन एव कौत्सः विषयं ज्ञातवान् । रघुः क्षेमं पृष्टवान् । आगमनकारणं च अपृच्छत् । कौत्सः अवदत् - 'गुरुदक्षिणा मया दातव्या । त्वम् इदानीं निर्धनः । याचनं न युक्तम् । कालम् अतिक्रम्य अहम् आगतवान् । अन्यं पृच्छामि' इति । रघुः - 'गुरवे कियत् धनं दातव्यम्' ? इति पृष्टवान् । कौत्सः स्वकथां कथितवान् - ''मम अध्ययनं समाप्तम् । ततः अहं 'गुरुदक्षिणा का' इति गुरुं पृष्टवान् । गुरुः उक्तवान् - 'दक्षिणा मास्तु । भक्त्या एव अहं सन्तुष्टः' इति । अहम् अनुरोधं कृतवान् । गुरुः कुपितः । 'चतुर्दशकोटिपरिमितं सुवर्णं दीयताम्' इति उक्तवान् । अहं दरिद्रः । कथम् आनयामि ? अतः अत्र आगतवान् । त्वं निर्धनः, अन्यत्र गच्छामि'' इति ।

रघुराजः 'अन्यत्र गमनं मास्तु । यदि अहं धनं न ददामि तर्हि मम अपवादः भविष्यति । अत्र एव वासं कुरु । कथञ्चित् धनं सम्पादयामि' इति अकथयत् ।

अन्यस्मिन् दिने रघुः कुबेरात् धनं ग्रहीतुं प्रस्थितवान् । किन्तु तावता कोषे सुवर्णवृष्टिः अभवत् । रघुः सुवर्णं कौत्साय दत्तवान् । कौत्सस्य मनोरथः पूर्णः अभवत् ।

## Raghu's generosity

Dilīpa grew old. Along with his wife he went to the forest . He undertook *Vanaprastha Aśrama*, the life of an ascetic. Raghu ascended the throne. Then he went on a conquest. He won over all regions. After his expedition, Raghu perfomed the *Viśvajit* sacrifice. In that sacrifice all wealth should be given away. Raghu, the great king gave away all his wealth. His treasury became empty.

Kautsa was the son of a sage. He was the pupil of the great sage Varatantu. He came to the king to ask for money he had to give to his teacher. Raghu offered '*Arghya*' (water for washing the hands) in an earthen vessel. This was enough for Kautsa to understand the situation. Raghu enquired after his welfare and asked why he had

come. Kautsa said - "I have to pay the fee to my guru. As you are penniless now it is not proper for me to ask for a gift from you. I have come late. I shall ask somebody else." Raghu asked - "How much money should be given to the teacher ?" Kautsa narrated his story - 'My education ended. Then I asked my teacher - "What is the fee ?' The teacher said 'The fee is not necessary. I am pleased with your devotion'. I insisted. The teacher got angry and said fourteen crores should be given. I am poor. How can I get so much money ? Hence I came to you. You have no money(now). I shall go elsewhere."

King Raghu said - "Do not go elsewhere. If I do not give you the money I shall get a bad name. Stay here. I shall somehow arrange to get you the money."

The next day Raghu was leaving for getting money from Kubera. In the meanwhile there was a shower of gold in his treasury. Raghu offered the gold to Kautsa. Kautsa's desire was fulfilled.

**एतेषाम् उत्तरं लिखत ।**

१. रघुः कं यागं कृतवान् ?
२. कौत्सः कस्य शिष्यः ?
३. गुरुः कौत्सं कां गुरुदक्षिणां पृष्टवान् ?

(Answers are given below)

## ८. अन्वयक्रमः

पौरैरनुगतो दूरं पित्रा दशरथेन च ।
शृङ्गवेरपुरे सूतं गङ्गाकूले व्यसर्जयत् ।।
गुहमासाद्य धर्मात्मा निषाधाधिपतिं प्रियम् ।।

---

**उत्तराणि**

१. रघुः विश्वजिद्यागं कृतवान् । २. कौत्सः वरतन्तुमुनेः शिष्यः । ३. गुरुः कौत्सं चतुर्दशकोटिपरिमितं सुवर्णं ददातु इति पृष्टवान् ।

**पदविभागः** - पौरैः, अनुगतः, दूरम्, पित्रा, दशरथेन, च, शृङ्गवेरपुरे, सूतम्, गङ्गाकूले, व्यसर्जयत्, गुहम्, आसाद्य, धर्मात्मा, निषाधाधिपतिं, प्रियम् ।

**अन्वयः** - पौरैः पित्रा दशरथेन च दूरम् अनुगतः धर्मात्मा (रामः) शृङ्गवेरपुरे निषाधाधिपतिं प्रियं गुहम् आसाद्य गङ्गाकूले सूतं व्यसर्जयत् ।

**प्रतिपदार्थः** - धर्मात्मा (रामः) - The righteous Rāma, अनुगतः - was followed, पौरैः - by the citizens, पित्रा दशरथेन च - and his father Daśaratha, दूरम् - for a distance. शृङ्गवेरपुरे - In Śṛngaverapura, गङ्गाकूले - on the banks of the ganges, आसाद्य - having met, प्रियं गुहम् - a friend Guha, निषाधाधिपतिम् - the king of the hunter tribe, व्यसर्जयत् - he(Rāma) sent back, सूतम् - the charioteer (Sumantra).

**तात्पर्यम्** - When Rāma left, the citizens and Daśaratha followed him for quite a distance. Finally they realised that they had to turn back towards the city. Going further, in Śṛngaverapura Rāma met the hunter-king Guha his dear friend, who took them across the river. Sumantra who drove the chariot of Rāma went up to the banks of river Ganges and was sent back from there.

चित्रकूटमनुप्राप्य भरद्वाजस्य शासनात् ।।
रम्यमावसथं कृत्वा रममाणा वने त्रयः ।
देवगन्धर्वसङ्काशास्तत्र ते न्यवसन् सुखम् ।।

**पदविभागः** - चित्रकूटम् + अनुप्राप्य, रम्यम् + आवसथम्, रममाणाः + वने, देवगन्धर्वसङ्काशाः + तत्र

The remaining words in the sloka are split. Write the पदविभाग yourself.

**अन्वयः** - भरद्वाजस्य, शासनात्, चित्रकूटम्, अनुप्राप्य, रम्यम्, आवसथम्, कृत्वा, देवगन्धर्वसङ्काशाः, ते, त्रयः, तत्र, वने, रममाणाः, सुखम्, न्यवसन् ।

**प्रतिपदार्थः** - भरद्वाजस्य शासनात् - As per the direction of sage Bharadvaja, अनुप्राप्य - having reached, चित्रकूटम् - Chitrakūṭa,

कृत्वा - (and) having built, रम्यम् आवसथम् - a beautiful hermitage, ते त्रयः - the three of them, देवगन्धर्वसङ्काशाः - who resembled Devas and Gandharvas, सुखं न्यवसन् - lived happily, रममाणाः - rejoicing, तत्र वने - in that forest.

**तात्पर्यम् –** Guha took Rāma, Lakṣmaṇa and Sīta across the river Ganga. Taking leave of him there they went to the hermitage of sage Bharadvāja. The sage extended a warm welcome to them. They partook of his hospitality and as advised by him, went to Chitrakūṭa and built a thatched hut there. It became a very comfortable place for them to live in. Their stay there was a very happy one. They spent time happily like Gods and Gandharvas.

## १. अनुवादपद्धतिः

Without taking into consideration the meaning of the whole sentence if we translate word for word it will result in an absurd statement. Moreover, each language has its own idiomatic usages. Their literal translation will be incorrect and unjustified. After understanding the meaning of these phrases, we must find the corresponding right expression in the other language. Read the following phrases for example.

| *Phrase* | *Incorrect Translation* | *Correct Translation* |
|---|---|---|
| A Black sheep | कृष्णः अजः | वञ्चकः |
| An old hand | प्राचीनः हस्तः | अनुभवी |
| A snake in the grass | तृणेषु स्थितः सर्पः | गुप्तशत्रुः |
| Blue blood | नीलरक्तम् | कुलीनः |
| Go to the dogs | शुनकं प्रति गच्छतु | नाशं प्राप्नोतु |
| Having his hands full | हस्तौ पूर्णौ भवताम् | कार्यमग्नः भवतु |
| In cold blood | शीतरक्ते | उद्देशपूर्वकम् |

You may also collect such phrases if possible. But be careful while translating them into Samskrit.

# १०. सन्धिः

## यण्सन्धिः

Observe the Sandhi in the following sentences.

१. संस्कृतकार्यम् **अत्युत्तमम्** अस्ति ।
२. सः **प्रत्येकं** कार्यं श्रद्धया करोति ।
३. श्रीकृष्णः **मध्वरिः** इति उच्यते ।
४. पाठः **मास्त्वधुना** इति अध्यापकः उक्तवान् ।
५. पुत्रः **पित्रंशम्** अपेक्षते ।
६. अद्य **मात्रर्चन**कार्यक्रमः प्रचलति ।

Observe the Euphonic combination in the words in bold type in the above examples.

१. अत्युत्तमम् = अति + उत्तमम् (इ + उ = य् + उ = यु)
२. प्रत्येकम् = प्रति + एकम् (इ + ए = य् + ए = ये)
३. मध्वरिः = मधु + अरिः (उ + अ = व् + अ = व)
४. मास्त्वधुना = मास्तु + अधुना (उ + अ = व् + अ = व)
५. पित्रंशः = पितृ + अंशः (ऋ + अ = र् + अ = र)
६. मात्रर्चनम् = मातृ + अर्चनम् (ऋ + अ = र् + अ = र)

If इ, उ, ऋ, ऌ are followed by any vowel except themselves, they are replaced by य, व, र and ल respectively. This is called यण्सन्धिः ।

य्, व्, र्, ल् are called यण्वर्णाः Therefore this combination is called यण्सन्धिः ।

Observe the examples given below.

१. यदि + अपि = यद्यपि (इ is replaced by य)
२. इति + अपि = इत्यपि ( ,, ,, ,, )
३. पठन्ति + अत्र = पठन्त्यत्र ( ,, ,, ,, )
४. गुरु + अष्टकम् = गुर्वष्टकम् (उ is replaced by व)

५. पठतु + अंशान् = पठत्वंशान् ( ''  ''  '' )
६. कविषु + एकः = कविष्वेकः ( ''  ''  '' )
७. पितृ + आवासः = पित्रावासः (ऋ is replaced by र)
८. ऌ + आकृतिः = लाकृतिः (ऌ is replaced by ल)

## अभ्यासः

**I.** Join the following Sandhis.

१. प्रति + अवदत्   २. नदी + अत्र
३. ननु + अत्र   ४. साधु + इदम्
५. पितृ + अंशः   ६. भ्रातृ + आह्वानम्
७. जननी + अवदत्   ८. इति + आचरन्ति
९. खलु + एतत्   १०. अपि + अवदत्

**II.** Split the following.

१. इत्यस्ति   २. दुःखेष्वनुद्वेगः   ३. गुर्वत्र
४. इत्यस्मि   ५. नदीष्वत्र   ६. पठन्त्यपि
७. मन्वन्तरम्   ८. पित्रिच्छा   ९. पुत्रेष्वहम्
१०. प्रत्युवाच

**(Answers on PNo - 235)**

## ११. सङ्ख्याविषयाः

**Famous sixes**

षट् कर्माणि - अध्ययनम्, अध्यापनम्, यजनम्, याजनम्, दानम्, प्रतिग्रहः

षट् कर्माणि (योगः) - धौति, बस्ति, नेति, नैलिकी, त्राटक, कपालभाति ।

षड् दर्शनानि - सांख्यम्, योगः, न्यायः, वैशेषिकम्, पूर्वमीमांसा, उत्तरमीमांसा (वेदान्तः) ।

षड् दुर्गाणि - धन्वदुर्गम्, महीदुर्गम्, गिरिदुर्गम्, मनुष्यदुर्गम्, मृद्दुर्गम्, वनदुर्गम् ।

षड् रसाः - कटुः, आम्लः, मधुरः, लवणः, तिक्तः, कषायः ।

षड् रिपवः - कामः, क्रोधः, लोभः, मोहः, मदः, मात्सर्यम् ।

## Tradition

(To recite while saluting Tulasi)

यन्मूले सर्वतीर्थानि यन्मध्ये सर्वदेवताः ।
यदग्रे सर्ववेदाश्च तुलसि त्वां नमाम्यहम् ।।

I bow to you Tulasi ! You have all the holy waters at the root, all the gods in the middle and all the Vedas at the tip.

### Answer to the Riddle

लोकनाथः when dissolved as a बहुव्रीहिसमासः would be लोकः नाथः यस्य सः - he whose patrons are the people. So लोकनाथः means a beggar. The same when dissolved as a षष्ठीतत्पुरुषः would be - लोकानां नाथः - the Lord of the people. So, लोकनाथः means the king.

# परिचयः - पञ्चमः पाठः

## प्रश्नाः

I. Change the following active expressions into passive.

१. बालकाः श्लोकं पठन्ति ।
२. रजकाः वस्त्राणि क्षालयन्ति ।
३. वृषभाः मार्गे अटन्ति ।
४. महाराजाः ऋषीन् सेवन्ते ।
५. उत्तमः अन्यान् क्षमते ।
६. मित्राणि प्रकाशं श्लाघन्ते ।

II. Answer the following questions.

1. What are the two possible meanings for **'लोकनाथः'** ?
2. Whom do the officers label as horses ?
3. What do small fellows do ?
4. In passive voice which case-ending does the **कर्मपद** take ?

III. Correct the errors and rewrite the following.

१. बालकः गम्यते ।
२. श्रीधरेण कम्पते ।
३. लतया सरोवरः पश्यते ।
४. मातरि + अर्चनम् = मात्रर्चनम् ।

---

**उत्तराणि**

I. १. बालकैः श्लोकः पठ्यते । २. रजकैः वस्त्राणि क्षाल्यन्ते । ३. वृषभैः मार्गे अट्यते । ४. महाराजैः ऋषयः सेव्यन्ते । ५. उत्तमेन अन्ये क्षम्यन्ते । ६. मित्रैः प्रकाशः श्लाघ्यते ।

II. 1. लोकः नाथः यस्य सः - He to whom the people are the guardians - लोकानां नाथः - The lord of the people. 2. All the animals having a tail are labelled as horses by the officers. 3. Small fellows begin small jobs and are agitated as they do not succeed. 4. In passive voice the कर्मपद takes the प्रथमाविभक्तिः ।

III. १. बालकेन गम्यते । २. श्रीधरेण कम्प्यते । ३. लतया सरोवरः दृश्यते । ४. मातृ + अर्चनम् - मात्रर्चनम् ।

## परिचयः - षष्ठः पाठः

।। गृहीत इव केशेषु मृत्युना धर्ममाचरेत् ।।

'Practise Dharma as if Death is dragging you by the hair'.

### १. भाषाभ्यासः

#### क्तप्रत्ययः

**I.** Read the following sentences carefully.

१. रामेण कार्यं कृतम् । The job was done by Rama.

२. देवेन वरः दत्तः । The boon was granted by God.

३. बालकैः कथा श्रुता । The story was heard by the boys.

४. प्राध्यापकेन विचारः उपस्थापितः । The topic was presented by the Professor.

५. महिलाभिः चर्चा कृता । A discussion was held by women.

६. गोपालकैः पद्यानि उक्तानि । Poems were recited by cowherds.

७. कर्मकरैः प्रकोष्ठाः मार्जिताः । The rooms were swept by workers.

८. मार्गदर्शिन्या मार्गाः दर्शिताः । The roads were shown by the (female) guide.

९. आपणिकेन शाटिकाः विक्रीताः । Sarees were sold by the shopkeeper.

१०. नर्तकीभिः फलानि खादितानि । Fruits were eaten by the (female)dancers.

All the above sentences are in Passive voice and Past tense. Hence, they follow these rules of कर्मणि प्रयोगः -

* the subject is in तृतीया
* the object is in प्रथमा विभक्तिः
* the verb follows the object.

(In कर्तरि प्रयोगः, the subject is in प्रथमा विभक्तिः, the object is in द्वितीया विभक्तिः, and the verb follows the subject.)

**II.** Let us see how verbs in active voice change in passive voice.

| कर्तरि | कर्मणि |
|---|---|
| १. बालिका कथां **श्रुत**वती । | बालिकया कथा श्रुता । |
| २. सः वृक्षं **दृष्ट**वान् । | तेन वृक्षः दृष्टः । |
| ३. अर्चकः देवम् **अर्चित**वान् । | अर्चकेन देवः अर्चितः । |
| ४. निर्वाहिका सूचनाः **दत्त**वती । | निर्वाहिकया सूचनाः दत्ताः । |
| ५. तन्त्रज्ञः गृहम् **अवलोकित**वान् । | तन्त्रज्ञेन गृहम् अवलोकितम् । |
| ६. वैद्यः अस्वस्थान् **परिशीलित**वान् । | वैद्येन अस्वस्थाः परिशीलिताः । |
| ७. छात्राः नाटकानि **अभिनीत**वन्तः । | छात्रैः नाटकानि अभिनीतानि । |
| ८. जनकः भगिनीः **आहूत**वान् । | जनकेन भगिन्यः आहूताः । |
| ९. माधवी पुष्पाणि **आनीत**वती । | माधव्या पुष्पाणि आनीतानि । |
| १०. भगिन्यः सत्कारं **कृत**वत्यः । | भगिनीभिः सत्कारः कृतः । |

Observe that only the portion of the verb printed in bold in कर्तरि happens to be the verb in कर्मणि ।

## अभ्यासः

**I.** Change the following कर्तरि form into कर्मणि as shown in the example.

*कर्तरि* *कर्मणि*

गतवान् गतः/गता/गतम्

| *कर्तरि* | *कर्मणि* | *कर्तरि* | *कर्मणि* |
|---|---|---|---|
| १. पठितवान् | ..../..../.... | ९. मिलितवान् | ..../..../.... |
| २. दृष्टवान् | ..../..../.... | १०. दग्धवान् | ..../..../.... |
| ३. लिखितवान् | ..../..../.... | ११. कल्पितवान् | ..../..../.... |
| ४. इष्टवान् | ..../..../.... | १२. वर्धितवान् | ..../..../.... |
| ५. नीतवान् | ..../..../.... | १३. प्रक्षालितवान् | ..../..../.... |
| ६. सुप्तवान् | ..../..../.... | १४. मार्जितवान् | ..../..../.... |
| ७. निरूढवान् | ..../..../.... | १५. पीतवान् | ..../..../.... |
| ८. मृतवान् | ..../..../.... | १६. दर्शितवान् | ..../..../.... |

**II.** Write the भूतकर्तरि and भूतकर्मणि forms of the following verbs.

| *वर्तमाने* | *कर्तरि* | *कर्मणि* |
|---|---|---|
| करोति | कृतवान् / वती | कृतः / कृता / कृतम् |
| १. जानाति | ......./........ | ..../..../.... |
| २. शक्नोति | ......../........ | ..../..../.... |
| ३. शृणोति | ......../........ | ..../..../.... |
| ४. ददाति | ......../........ | ..../..../.... |
| ५. क्रीणाति | ......../........ | ..../..../.... |
| ६. स्मरति | ......../........ | ..../..../.... |
| ७. अपसरति | ......../........ | ..../..../.... |
| ८. अपहरति | ......../........ | ..../..../.... |

| ९. कम्पते | ......../........ | ..../..../.... |
|---|---|---|
| १०. वर्धते | ......../........ | ..../..../.... |

**III.** Change the following sentences into passive voice.

उदा - बालः विद्यालयं गतवान् । बालेन विद्यालयः गतः ।

१. शिक्षिका श्लोकं पठितवती ।

२. मार्जालः क्षीरं पीतवान् ।

३. भवानी शाटिकां स्वीकृतवती ।

४. छात्रः उत्पीठिकाम् अपसारितवान् ।

५. शिशुः चन्द्रं दृष्टवान् ।

६. परीक्षानिर्वाहकः विद्यालयान् अवलोकितवान् ।

७. उद्यानपालकः सस्यानि आरोपितवान् ।

८. लिपिकाराः सञ्चिकाः सज्जीकृतवन्तः ।

९. बालिकाः लेखनीः पातितवत्यः ।

१०. अध्यापकः बालकान् प्रेषितवान् ।

**IV.** What was done (✓) or not done (✗) by someone is indicated below. Write the sentences in past tense in passive voice as shown in the example.

उदा - बालकः - ग्रन्थः (क्री) ✓ बालकेन ग्रन्थः क्रीतः ।

रजकः - वस्त्राणि (नी) ✗ रजकेन वस्त्राणि न नीतानि ।

१. सर्पः - मूषकः (खाद्) ✗ ...... ...... ......

२. गृहिणी - पाकः (कृ) ✓ ...... ...... ......

३. वैद्यः - औषधम् (दा) ✗ ...... ...... ......

४. शिशुः - क्षीरम् (पा) ✗ ...... ...... ......

५. यात्रिकः - सङ्केतः (स्मृ) ✗ ...... ...... ......

६. देवः - भक्ताः(रक्ष्) ✓ ...... ...... ......

७. धनिकः - माला (नी) ✓ ...... ...... ......

८. अग्रजः - अनुजा (निन्द्) ✗ ...... ...... ......

९. शिष्यः - गुरुः (वन्द्) ✓ ...... ...... ......

(Answers on PNo - 236)

## २. व्यावहारिकशब्दावली

| वेषभूषणानि | | अलङ्कारवस्तूनि | |
|---|---|---|---|
| ऊरुकम् | Trousers | कङ्कणम् | Bangle |
| युतकम् | Shirt | कण्ठहारः | Necklace |
| अर्धोरुकम् | Knickers/Pants | ताटङ्कः | Ear-studs |
| अन्तर्युतकम् | Banian | अङ्गुलीयकम् | Finger- ring |
| करांशुकम् | Jibba | नासाभरणम् | Nose-stud |
| पादांशुकम् | Pyjamas | मेखला | Waist-band |
| वेष्टिः | Dhoti | केयूरम् | Armlet |
| चित्रवेष्टिः | Lungi | किङ्किणी | Anklet |
| शाटिका | Sari | पादोर्मिका | Toe - ring |
| चोलः | Blouse | नखरागः | Nail - enamel |
| निचोलः | Long skirt | सुवासकम् | Talcum powder |
| अर्धनिचोलः | Skirt | ओष्ठरागः | Lipstick |
| प्रोञ्छः | Towel | हैमिका | Snow |
| करवस्त्रम् | Hand-kerchief | तिलकम् | Mark on the forehead |
| ऊर्णिका | Muffler | | |
| शिरस्त्रम् | Cap | कटिपट्टः | Belt |
| पादस्यूतः | Sock | प्रावारकम् | Coat |
| स्वेदकम् | Sweater | | |

## ३. चाटुश्लोकः

The power of Rāma's name is great. The utterance of Rāma's name brings merit. Taking the name of Rāma in any way, leads to liberation. Not only does the person chanting the name 'राम' intentionally, get salvation but also one who utters the sound 'राम' accidentally, without a desire to do so, as the following śloka says.

वने **चरामो** वसु चाह**रामः**
नदीस्त**रामो** न भयं स्म**रामः** ।
इतीरयन्तोऽपि वने किराताः
मुक्तिं गता रामपदानुषङ्गात् ।।

We wander (**चरामः**) in the forest. We bring (**आहरामः**) wealth. We cross rivers. (**तरामः**) We do not remember (**न स्मरामः**) any fear. The hunters saying this got liberated because of pronouncing the word Rāma (**रामः**), although unconsciously.

## ४. समस्या

In one pāda(पाद) of a verse if there is a sentence or words with an apparent contradiction and the remaining pādas are composed in such a way as to resolve this contradiction it is known as समस्यापूरणम् ।

Here is a samasyā – हुताशनश्चन्दनपङ्कशीतलः (The fire is as cool as the sandal paste). In the statement 'fire is cool' there is an apparent incompatibility. The following stanza removes this incompatibility and solves the puzzle.

सुतं पतन्तं समवेक्ष्य पावके
न बोधयामास पतिं पतिव्रता ।
तदाभवत् तत्पतिभक्तिगौरवात्
हुताशनश्चन्दनपङ्कशीतलः ।।

A certain householder was sleeping with his head on the lap of his

wife. Their child who was playing right there, was about to fall into fire. Fearing that her husband would be disturbed in his sleep, the devoted wife did not move even a bit. On account of her stead fast devotion towards the husband, the fire turned cool like sandal paste(for the child) !

## ५. सुभाषितम्

यदा किञ्चिज्ज्ञोऽहं गज इव मदान्धः समभवम्
तदा सर्वज्ञोऽस्मीत्यभवदवलिप्तं मम मनः ।
यदा किञ्चित् किञ्चित् बुधजनसकाशादवगतम्
तदा मूर्खोऽस्मीति ज्वर इव मदो मे व्यपगतः ।।

**पदविभागः** - यदा, किञ्चिज्ज्ञः, अहम्, गजः, इव, मदान्धः, समभवम्, तदा, सर्वज्ञः, अस्मि, इति, अभवत्, अवलिप्तम्, मम, मनः, यदा, किञ्चित्, किञ्चित्, बुधजनसकाशात्, अवगतम्, तदा, मूर्खः, अस्मि, इति, ज्वरः, इव, मदः, मे, व्यपगतः ।

**प्रतिपदार्थः** - यदा - When, अहम् - I, किञ्चिज्ज्ञः - knew a little, (तदा then), गजः इव - like an elephant, मदान्धः समभवम् - I was arrogant (literally blind with intoxication). तदा - Then, मम - my, मनः - mind, अवलिप्तम् अभवत् - was conceited; सर्वज्ञः अस्मि इति - with the feeling 'I know everything'. यदा - When, बुधजनसकाशात् - due to my association with scholars, किञ्चित् किञ्चित् अवगतम् - I learnt a little, तदा - then, मूर्खोऽस्मीति - (I realised) that I was (afterall) a fool (and), ज्वर इव - like fever, मे - my, मदः - pride, व्यपगतः - was gone.

**तात्पर्यम्** - Knowing a little, I got blind with pride like an elephant. Then I arrogantly thought of myself as omniscient. When I did learn something, little by little, from the learned and realised that I was afterall ignorant, my pride subsided like fever.

(अवलिप्तम् - proud; व्यपगतः - went away.)

विपदि धैर्यमथाभ्युदये क्षमा सदसि वाक्पटुता युधि विक्रमः ।
यशसि चाभिरुचिर्व्यसनं श्रुतौ प्रकृतिसिद्धमिदं हि महात्मनाम् ।।

**पदविभागः** - विपदि, धैर्यम्, अथ, अभ्युदये, क्षमा, सदसि, वाक्पटुता, युधि, विक्रमः, यशसि, च, अभिरुचिः, व्यसनम्, श्रुतौ, प्रकृतिसिद्धम्, इदम्, हि, महात्मनाम् ।

**प्रतिपदार्थः** - विपदि - In adversity, धैर्यम् - courage, अभ्युदये - in prosperity, क्षमा - forgiveness, सदसि - in an assembly, वाक्पटुता - oratory, युधि - in a battle, विक्रमः - valour, च - and यशसि - in acquiring fame, अभिरुचिः - a strong desire, श्रुतौ - in learning, व्यसनम् - interest - महात्मनाम् - In great men इदम् प्रकृतिसिद्धम् हि - these (qualities) are naturally found.

**तात्पर्यम्** - Courage in adversity, patience in prosperity, oratory in an assembly, bravery in battle, interest in fame, desire for acquiring knowledge - all these are naturally found in the great persons.

## ६. पदसङ्ग्रहः

**पृच्छ्** - to ask, question

१. पृच्छति २. पृच्छ्यते ३. प्रक्ष्यति

४. प्रष्टव्यम् - प्रच्छनीयम् ५. पृष्टः - पृष्टा - पृष्टम् ६. पृष्टवान् - पृष्टवती ७. पृच्छन् - पृच्छन्ती - पृच्छती ८. पृष्ट्वा - आपृच्छ्य(having sent/seen off) ९. प्रष्टुम् ।

**प्रेष्** - to send

१. प्रेषयति २. प्रेष्यते ३. प्रेषयिष्यति

४. प्रेषयितव्यम् - प्रेषणीयम् ५. प्रेषितः - प्रेषिता - प्रेषितम् ६. प्रेषितवान् - प्रेषितवती ७. प्रेषयन् - प्रेषयन्ती ८. प्रेषयित्वा - सम्प्रेष्य ९. प्रेषयितुम् ।

**कृ** - to do

१. करोति २. क्रियते ३. करिष्यति

४. कर्तव्यम् - करणीयम् ५. कृतः - कृता - कृतम् ६. कृतवान् - कृतवती ७. कुर्वन् - कुर्वती ८. कृत्वा - संस्कृत्य (having refined) ९. कर्तुम्

**श्रु** - to hear

१. शृणोति २. श्रूयते ३. श्रोष्यति

४. श्रोतव्यम् - श्रवणीयम् ५. श्रुतः - श्रुता - श्रुतम् ६. श्रुतवान् - श्रुतवती ७. शृण्वन् - शृण्वती ८. श्रुत्वा - प्रतिश्रुत्य (having promised) ९. श्रोतुम्

**ज्ञा** - to know

१. जानाति २. ज्ञायते ३. ज्ञास्यति

४. ज्ञातव्यम् - ज्ञानीयम् ५. ज्ञातः - ज्ञाता - ज्ञातम् ६. ज्ञातवान् - ज्ञातवती ७. जानन् - जानती ८. ज्ञात्वा - प्रतिज्ञाय (having taken a vow) ९. ज्ञातुम्

## ७. काव्यकथा

## अजमहाराजः

कौत्सस्य आशीर्वादेन रघोः पुत्रः उत्पन्नः । सः एव अजः । अजः रूपेण गुणेन च रघुसदृशः । अजः प्रवृद्धः । सर्वाः विद्याः अधीतवान् । तरुणः विद्याविनयसम्पन्नः अभवत् ।

विदर्भदेशस्य नृपः भोजः । भोजस्य अनुजा इन्दुमती । तस्याः स्वयंवरकार्यक्रमः निश्चितः । भोजः रघुमहाराजाय आमन्त्रणं प्रेषितवान् । ततः अजः स्वयंवरार्थं विदर्भदेशं गतवान् । स्वयंवरार्थं मगधेश्वरः, अङ्गराजः, अवन्तिनाथः, कार्तवीर्यार्जुनः, अन्ये च नृपाः आगताः । किन्तु इन्दुमती सर्वगुणसम्पन्नम् अजमहाराजम् एव वृतवती । विवाहः सम्पूर्णः । अजः स्वनगरं प्रति प्रस्थितवान् । मध्ये अन्ये नृपाः अनेन सह युद्धं

कृतवन्तः । युद्धे नृपाः पराजिताः । अजः विजितवान् । सः अयोध्यां प्रत्यागतवान् । रघुः अजम् अभिनन्दितवान् । ततः रघुः अजं सिंहासने प्रतिष्ठापितवान् ।

अजः प्रजाः पुत्रान् इव अरक्षत् । ततः रघुः वानप्रस्थाश्रमं स्वीकृतवान् । योगमार्गेण भगवन्तं द्रष्टुं सङ्कल्पितवान् । कालः अतीतः । रघुः मोक्षं प्राप्तवान् । अजस्य इन्दुमत्याः च पुत्रः जातः । सः दशरथः ।

अजः कदाचित् इन्दुमत्या सह उद्यानं गतवान् । तदा एकः पुष्पहारः इन्दुमत्याः उपरि पतितः । तदा इन्दुमती मृता । तस्याः पुरा एकः शापः आसीत् । सा शापेन ग्रस्ता अप्सराः आसीत् । इदानीं शापात् मुक्ता । अत एव सा मृता । इन्दुमत्याः विरहेण अजः दुःखतप्तः जातः । आचार्यः वसिष्ठः समाधानवचनानि उक्तवान् । तथापि दुःखं न शान्तम् । अजः दुःखपीडितः एव राज्यं रक्षितवान् । अन्ते विरहदुःखेनैव गङ्गायाः सङ्गमे देहत्यागं कृतवान् । ततः दशरथः राजा अभवत् ।

## AJA, THE GRãEAT KING

By ãKautsa's blessings a son was born to Raghu. He was named Aja. He was like Raghu in appearance and merit. Aja grew up. He learnt all skills. He became a youth endowed with learning and modesty.

Bhoja was the king of Vidarbha region. Bhoja's sister was Indumatī. Her Svayamvara was fixed. Bhoja sent an invitation to king Raghu. Then Aja went to Vidarbha for the Svayamvara. The kings of Magadha, Anga, Avanti, as also Kartaviryarjuna and many other kings came to the Svayamvara. But Indumatī chose king Aja who was the repository of all virtues. The wedding ceremony being completed, Aja started for his city. On the way, the other kings fought with Aja. Those kings were defeated and Aja won. He returned to Ayodhya. Raghu congratulated Aja. Later Raghu placed Aja on the throne.

Aja protected his subjects like his own children. Then Raghu undertook the *Vanaprastha aśrama* (the life of an ascetic which is the third stage in one's life). He decided to realise God through the path of Yoga. Time passed. Raghu attained liberation. Aja and Indumatī got a son. His name was Daśaratha.

Once Aja went to the garden with Indumatī. A garland fell on Indumatī and she died. She had got a curse in the past. She was an Apsara under the effect of the curse. Now she was free from that curse. Therefore she died. By the death of Indumatī Aja was grief-sticken. The priest Vasiṣṭha spoke some words of condolence. Even then his grief did not end. Despite being oppressed by sorrow Aja ruled the kingdom. At last with his grief of separation, he gave up his body in the confluence of the Ganga and the Yamuna. Then Daśaratha became King.

**एतेषाम् उत्तरं लिखत ।**

१. विदर्भदेशस्य नृपः कः ?
२. इन्दुमत्याः स्वयंवरार्थं के के आगताः ?
३. रघुः किं कर्तुं सङ्कल्पितवान् ?
४. इन्दुमती कथं मृता ?
५. अजः केन कुत्र देहत्यागं कृतवान् ?

(Answers are given below)

## ८. अन्वयक्रमः

चित्रकूटं गते रामे पुत्रशोकातुरस्तथा ।
राजा दशरथः स्वर्गं जगाम विलपन् सुतम् ।।

**पदविभागः** - पुत्रशोकातुरः + तथा - The remaining words are already split.

---

**उत्तराणि**

१. विदर्भदेशस्य नृपः भोजः । २. इन्दुमत्याः स्वयंवरार्थं मगधेश्वरः, अङ्गराजः, अवन्तिनाथः, कार्तवीर्यार्जुनः, अन्ये च नृपाः आगताः । ३. रघुः योगमार्गेण भगवन्तं द्रष्टुं सङ्कल्पितवान् । ४. उद्याने इन्दुमत्याः उपरि एकः पुष्पहारः पतितः । तदा सा मृता । ५. अजः विरहदुःखेन गङ्गायाः सङ्गमे देहत्यागं कृतवान् ।

**अन्वयः** - रामे चित्रकूटं गते पुत्रशोकातुरः राजा दशरथः सुतं विलपन् स्वर्गं जगाम ।

**प्रतिपदार्थः** - रामे चित्रकूटं गते - When Rāma had reached Chitrakūṭa, पुत्रशोकातुरः - grief - stricken due to the separation of his son राजा दशरथः - king Daśaratha, सुतं विलपन् - lamenting over his son, स्वर्गं जगाम - died (went to heaven).

**तात्पर्यम्** - The stay in Chitrakūṭa was not an unhappy one for Rāma, Sītā or Lakṣmaṇa. They were extremely happy enjoying nature's beauty around. But, for Daśaratha in the palace the separation of his dear son was unbearable. Like a dart it was piercing his heart. Thinking of him he continuously shed tears. The main cause of his sorrow was that his own action had been responsible for Rāma's exile. In his oldage it was too much for him to take the shock of पुत्रवियोग । Unable to bear the guilt he passed away with in 6-8 days of Rāma's exile.

गते तु तस्मिन् भरतो वसिष्ठप्रमुखैर्द्विजैः ।
नियुज्यमानो राज्याय नैच्छद्राज्यं महाबलः ।।

**पदविभागः** - वसिष्ठप्रमुखैः + द्विजैः, न + ऐच्छत् + राज्यम्

The remaining words in the sloka are already split.

**अन्वयः** - तस्मिन् (दशरथे) गते तु वसिष्ठप्रमुखैः द्विजैः राज्याय नियुज्यमानः महाबलः भरतः राज्यं न ऐच्छत् ।

**अन्वये विशेषः**

After splitting up the words in a sloka, we have to arrange them in prose order in accordance with the case-termination (विभक्ति) number (वचन) etc. You will learn more about अन्वयक्रम in this lesson.

Let us analyse the prose order (अन्वय) of the sloka above, step by step and learn how to arrange the words in any given sloka in अन्वयक्रम.

1. We must pick the main verb (क्रियापद) / verbs in the sloka. In

this verse there is only one main verb - ऐच्छत्

2. Next we must identify the subordinate clause. A subordinate verb (अप्रधानक्रिया) is always accessory to the main clause. But, it may have its own subject, object etc. In this sloka there are two subordinate verbs namely - गते (गतः) and नियुज्यमानः ।
3. We should then group the words in the sloka according to their case terminations.

प्रथमा - नियुज्यमानः महाबलः, भरतः
द्वितीया - राज्यम्
तृतीया - वसिष्ठप्रमुखैः द्विजैः
चतुर्थी - राज्याय
सप्तमी - तस्मिन् गते
अव्ययम् - तु, न

Now the words have to be put in prose order.

१. The indeclinable 'न' must go with the main verb as न ऐच्छत् ।

२. 'गते तु तस्मिन्' - is a usage called सति सप्तमी प्रयोगः । It will be explained in detail in the next level. For now, we shall retain these three words as they are. (Note that there is a similar usage in the previous sloka also.)

३. अ) The words वसिष्ठप्रमुखैः द्विजैः राज्याय, are linked to the अप्रधानक्रिया 'नियुज्यमानः'

आ) The remaining words महाबलः भरतः राज्यम् are associated with the main क्रिया 'ऐच्छत्'. नियुज्यमानः is an action subservient to the main action ऐच्छत् ।

४. Now the अन्वय is -

५. अ. | वसिष्ठप्रमुखैः द्विजैः | The words in this box are directly related to the verb 'नियुज्यमानः'।

आ. The subordinate clause 'वसिष्ठप्रमुखैः द्विजैः नियुज्यमानः' is related to the main verb न ऐच्छत्.

The clause 'तस्मिन् गते तु' added in the beginning completes the अन्वय ।

Now the complete sentence is -

तस्मिन् गते तु वसिष्ठप्रमुखैः द्विजैः राज्याय नियुज्यमानः महाबलः भरतः राज्यं न ऐच्छत् । This is the prose order of the sloka.

Following this method try to arrange the words in the following slokas in अन्वयक्रम । You will then be able to master the technique of analysing verses and understanding their meaning correctly.

**प्रतिपदार्थः** - तस्मिन् (दशरथे) गते तु = When he (Dasharatha) was gone (to the next world), नियुज्यमानः = being appointed, राज्याय = to rule the kingdom, वसिष्ठप्रमुखैः द्विजैः = by the (senior) brahmins Vasiṣṭha and others, महाबलः = the mighty, भरतः = Bharata, न ऐच्छत् = did not want (did not agree to rule), राज्यम् = the kingdom.

**तात्पर्यम्** - Daśaratha passed away and the throne fell vacant. The kingdom was in danger without a king. It was the duty of the royal priest Vasiṣṭha to appoint the next king. The eldest prince Rāma who was the heir to the throne had gone off to the forest. Next was Bharata. It was also the desire of his mother Kaikeyi that he should be made the king. Hence Vasiṣṭha and others decided to place him on the throne and conveyed the same to him. Bharata was no doubt eligible to ascend the throne. Born in the royal family, he was young and valourous. The actual heir was away in the forest. Before his death Daśarata had also yielded to this wish of Kaikeyi. Inspite of all this, Bharata did not comply with the request of Vasiṣṭha and

others. He thought that Rāma's exile alone did not give him the right over the throne. Afterall he too was a pious brother of the noble Rāma !

## १. अनुवादपद्धतिः

You learnt that while translating a specific idea, it is preferable to adopt literal translation (शब्दानुवादः) method so that the tense, case-termination etc., are clearly conveyed. However, while translating a story or a news item or a lengthy article, the total import should be conveyed. भावानुवादः is preferred here.

Given below are a few other points that are to be borne in mind while translating -

★ Carefully read the matter to be translated from beginning to end once.
★ Then read each sentence and try to grasp the purport of it.
★ As far as possible construct simple and short sentences dividing the matter in accordance with the purport. Each sentence may consist of three or four words.
★ In the initial stage try to break up long sentences . Thus you can minimise errors.
★ In the beginning do not attempt to translate passages containing technical matter or serious debates or news paper articles. For, you will find it difficult to handle both the language and the subject matter.
★ Make it a habit to go over what you have written. Given below are a few examples to show how a long sentence can be broken into small sentences.

1. Once a farmer, Govinda by name, living in Karavīrapura on his way to the city met a friend and he asked him - 'Is everything well'?

   पूर्वं करवीरपुरे गोविन्दः नाम एकः कृषकः वसति स्म । एकदा सः नगरं गच्छन् आसीत् । तदा तस्य स्नेहितः मार्गे मिलितवान् । सः पृष्टवान् - ''किं भोः, सर्वं कुशलं वा?'' इति ।

2. Srirām, who was a clerk in a post-office and did not get a pension even a year after retirement, he went to the main post-office enraged and having met a higher officer, he reported to him that he was Srirām who had been working in the same department but had not received any pension sofar.
श्रीरामः पत्रालयकार्यालये लिपिकारः आसीत् । निवृत्तेः एकवर्षानन्तरम् अपि निवृत्तिवेतनं न आगतम् इति सः खिन्नः । अतः सः प्रधानपत्रालयकार्यालयं गतवान् । अधिकारिणं दृष्टवान् । 'अहं श्रीरामः । अत्र एव पूर्वं कार्यं करोमि स्म । इतोऽपि निवृत्तिवेतनं न लब्धम्' इति सः सूचितवान् ।
3. Formerly, when king Bhoja was ruling, a farmer called Suguṇa, as he was in the city of Dhāra, came across a gold vessel, felt happy that he had a lucky break.
पूर्वं भोजराजः धारानगरं पालयति स्म । तदा सुगुणः नाम कृषकः आसीत् । एकदा सः कर्षणसमये एकं सुवर्णपात्रं दृष्टवान् । 'भाग्यं फलितम्' इति सः सन्तुष्टः जातः ।

Following these guide lines you can start translating short stories.

## १०. सन्धिः

### पूर्वरूपसन्धिः

Study the following examples of Sandhi.

१. **तेऽत्र** आगच्छन्ति इति मन्ये ।
२. **गृहेऽहम्** अस्मि इति सः अवदत् ।
३. गृहे **केऽपि** न सन्ति ।
४. **धीरोऽपि** धैर्यच्युतिं प्राप्नोति कदाचित् ।
५. **कोऽपि** परिश्रमं न इच्छति एतेषु दिनेषु ।

Sandhi words in the above sentences should be split up as follows.

१. तेऽत्र = ते + अत्र        २. गृहेऽहम् = गृहे + अहम्

३. केऽपि = के + अपि    ४. धीरोऽपि = धीरो + अपि
५. कोऽपि = को + अपि

When the letters 'ए' or 'ओ' which is पदान्त (the ending letter of a word) is followed by the short vowel 'अ', the two letters are replaced by 'ए' or 'ओ' respectively. This is called पूर्वरूपसन्धिः। In पूर्वरूपसन्धि the sign "ऽ" (अवग्रहचिह्नम्) is generally used.

Here are some more examples -

- विवेकानन्दोऽयम् = विवेकानन्दो + अयम्
- स्नातकोऽपि = स्नातको + अपि
- रामोऽवदत् = रामो + अवदत्
- जलेऽस्मिन् = जले + अस्मिन्
- विषयेऽनासक्तः = विषये + अनासक्तः
- सुन्दरेऽम्बरे = सुन्दरे + अम्बरे
- अन्तेऽपि = अन्ते + अपि
- अल्पेऽवसरे = अल्पे + अवसरे

## अभ्यासः

**I.** Join the following words.

१. देशो + अयम्   २. मृगो + अस्ति ।   ३. नारदो + अपि
४. नीले + अम्बरे   ५. कलालये + अपठत्   ६. मात्रे + अर्पितम्
७. पुरुषो + अन्यः   ८. रामो + अहसत्   ९. नगरे + अवसत्
१०. ग्रामे + अस्ति

**II.** Split the following words.

१. पुस्तकेऽपि   २. कालोऽस्ति   ३. कोऽत्र
४. कृष्णोऽतिथिः   ५. सर्वेऽवदन्   ६. अध्यापकोऽहम्
७. मयूरोऽनृत्यत्   ८. पुत्रोऽनवरतम्   ९. सोऽक्रीडत्
१०. उदाहरणेऽस्मिन्

**(Answers on PNo - 236)**

# ११. सङ्ग्राह्यविषयाः

**Famous sevens**

१. सप्तर्षयः - मरीचिः, अत्रिः, आङ्गिरसः, पौलस्त्यः, पुलहः, क्रतुः, वसिष्ठः ।
२. सप्त समुद्राः - क्षारम्, क्षीरम्, दधि, मधु, सुरा, इक्षुः, शुद्धोदकम् ।
३. सप्त कुलपर्वताः - महेन्द्रः, मलयः, सह्यः, शक्तिमान्, ऋक्षवान्, विन्ध्यः, पारियात्रः ।
४. सप्त प्रकृतयः - राजा, मन्त्री, सुहृत्, कोशः, राष्ट्रम्, दुर्गम्, सेना ।

**Tradition**

Sloka to be recited while circumambulating the Peepul tree.

मूलतो ब्रह्मरूपाय मध्यतो विष्णुरूपिणे ।
अग्रतो रुद्ररूपाय वृक्षराजाय ते नमः ।।

I bow to you the king of trees (Aśvattha). There is Brahma at your root, Viṣṇu in the middle(stem) and Rudra at the tip.

---

**उत्तराणि**

I. १. देशोऽयम्, २. मृगोऽस्ति, ३. नारदोऽपि, ४. नीलेऽम्बरे, ५. कलालयेऽपठत्, ६. मात्रेऽर्पितम्, ७. पुरुषोऽन्यः, ८. रामोऽहसत्, ९. नगरेऽवसत्, १०, ग्रामेऽस्ति

II. १. पुस्तके + अपि, २. कालो + अस्ति, ३. को + अत्र, ४. कृष्णो + अतिथिः, ५. सर्वे + अवदन्, ६. अध्यापको + अहम्, ७. मयूरो + अनृत्यत्, ८. पुत्रो + अनवरतम्, ९. सो + अक्रीडत्, १०. उदाहरणे + अस्मिन्

# परिचयः - षष्ठः पाठः

## प्रश्नाः

I. Traslate the following sentences using words ending in क्तप्रत्यय ।

1. Directions were given by the leader.
2. Stories were told by the paternal grand mother.
3. Dreams were seen by the young lady.
4. The saris were counted by the shopkeeper.
5. Utensils were washed by the maid servant.
6. Trees were shown by Sureśa.

II. Write the meaning of the following verse in prose order.

लोभात् क्रोधः प्रभवति लोभात् कामः प्रजायते ।
लोभान्मोहश्च नाशश्च लोभः पापस्य कारणम् ।।

(Anger arises from greed ; from greed lust is born ; from greed are born confusion and destruction ; hence greed is the cause of sin.)

III. Answer the following.

1. Why did fire become cool like sandal paste ?
2. When did arrogance go like fever ?
3. रामेण पाठः पठितः - Which two words here have वचनसम्बन्ध (a common number) ?
4. What should one possess in times of danger ?
5. Write the तव्यदन्त and अनीयरन्त forms of the root 'सूच्' ।

(**Note:** Answers for the above exercises are given in the end of this book on PNO - 236. After completing the exercises check your answers.)

# परिचयः - सप्तमः पाठः

।। अनुक्तमप्यूहति पण्डितो जनः ।।

A wise man understands even that which is not spoken.

## १. भाषाभ्यासः

### कर्मणिप्रयोगः-भूतकालः

Read the following sentences carefully.

१. बालकेन विद्यालयः **अगम्यत** । The school was gone to by the boy.

२. कपिना फलम् **अखाद्यत** । Fruit was eaten by the monkey.

३. निर्वाहकेण चिटिका **अदीयत** । Ticket was given by the conductor.

४. प्राचार्येण लेखनी **अपात्यत** । The pen was dropped by the principal.

५. बुद्धिमत्या वादः **अक्रियत** । Argument was done by the intelligent girl.

६. छात्रैः पाठः **अपठ्यत** । The lesson was read by the students.

७. पुत्रेण जलम् **अपीयत** । Water was drunk by the son.

८. तया गीतम् **अश्रूयत** । The song was listened to by her.

९. भगिन्या बालाः **अदृश्यन्त** । Children were seen by the sister.

१०. जनैः द्विचक्रिकाः **अक्रीयन्त** । Two wheelers were bought by the people.

११. अर्चकेन श्लोकाः **अश्रूयन्त** । Slokas were heard by the temple - priest.

१२. निर्देशकेन अभिनेत्र्यः **अस्मर्यन्त** । Actresses were remembered by the Director.

१३. जनकेन भगिन्यः **असूच्यन्त** । Sisters were informed by the father.

१४. उद्यानपालकेन वृक्षाः **अपाल्यन्त** । Trees were reared by the gardener.

१५. गृहिणीभिः कार्याणि **अक्रियन्त** । Chores were done by housewives.

Since the above sentences are in Passive voice and Past tense, they follow these rules of Passive Voice.

The कर्तृपदम् is in तृतीया विभक्तिः the कर्मपदम् is in प्रथमा विभक्तिः and the क्रियापदम् agrees with the कर्मपदम् ।

Let us try to understand the form of the passive verb in Past tense.

1. The Past tense form of वन्दते is अवन्दत । Similarly, the past tense form of वन्द्यते is अवन्द्यत ।

   Like wise -

| *वर्तमाने* | *भूते* |
|---|---|
| पठ्यते | अपठ्यत |
| लिख्यते | अलिख्यत |
| गम्यते | अगम्यत |
| श्रूयते | अश्रूयत |
| खाद्यते | अखाद्यत |

2. Just as अवन्दत has 9 forms, so also अपठ्यत etc have 9 forms.

| | ए.व. | द्वि.व. | ब.व. |
|---|---|---|---|
| प्र.पु. | अपठ्यत | अपठ्येताम् | अपठ्यन्त |
| म.पु. | अपठ्यथाः | अपठ्येथाम् | अपठ्यध्वम् |
| उ.पु. | अपठ्ये | अपठ्यावहि | अपठ्यामहि |

3. The verb can be either Parasmaipadi or Atmanepadi in the Active voice (कर्तरि). But it is Atmanepadi only in the Passive voice. In भूतकर्मणि प्रयोगः 'य' is affixed to the verb as is done in वर्तमानकालः । Eg., अपठ्यत, अलिख्यत, अगम्यत, अयाच्यत ।
4. In the Pravesha lessons you have learnt that in कर्तरि प्रयोगः, अपठत् and पठितवान्/पठितवती have the same meaning. Similarly, in कर्मणि प्रयोगः, अपठ्यत and पठितः/पठिता/ पठितम् mean the same.

उदा - लिखितः / लिखिता / लिखितम् = अलिख्यत ।
ज्ञातः / ज्ञाता / ज्ञातम् = अज्ञायत ।
श्रुतः / श्रुता / श्रुतम् = अश्रूयत ।

5. ज्ञातः/ज्ञाता/ज्ञातम् are past participle forms (भूतकृदन्तानि) and अज्ञायत is a लङ् लकार form.

## अभ्यासः

I. Change the following Present tense forms into Past tense.

उदा - ज्ञायते - <u>अज्ञायत</u>

१. दृश्यते - .............. २. गम्यते - ..............
३. श्रूयते - .............. ४. पाल्यते - ..............
५. क्रियते - .............. ६. दीयते - ..............
७. मार्ज्यते - ............ ८. नीयते - ..............
९. स्मर्यते - ............. १०. श्लाघ्यते - ..............

II. Fill in the blanks with the other two numbers of the given verbs.

उदा - अलिख्यत अलिख्येताम् अलिख्यन्त

१. अनीयत ............ ............ ।

२. ............ अखाद्येताम् ............ ।

३. ............ ............ अगम्यन्त ।

४. ............ अक्रियेताम् ............ ।

५. अज्ञायत ............ ............ ।

६. अवन्द्यत ............ ............ ।

७. ............ ............ अदृश्यन्त ।

८. ............ अपठ्येताम् ............ ।

III. Write the Present and Past Passive forms of the following verbs that are in Active voice.

| | वर्त | भूते |
|---|---|---|
| उदा - पठति - | पठ्यते | अपठ्यत |
| १. शृणोति - | ............ | ............ |
| २. ददाति - | ............ | ............ |
| ३. पचति - | ............ | ............ |
| ४. हरति - | ............ | ............ |
| ५. पातयति - | ............ | ............ |
| ६. खादति - | ............ | ............ |
| ७. चिन्तयति - | ............ | ............ |
| ८. वन्दते - | ............ | ............ |
| ९. स्मरति - | ............ | ............ |

१०. दर्शयति - ........... ...........

**IV.** Change the following भूतकृदन्त forms into लङ् लकार, third person singular.

उदा - कृतम् - अक्रियत

१. स्थापितम् - ........................
२. क्षालितम् - ........................
३. स्मृतम् - ........................
४. गणितम् - ........................
५. चोरितम् - ........................
६. ज्ञातम् - ........................
७. दृष्टम् - ........................
८. लिखितम् - ........................
९. सूचितम् - ........................
१०. आनीतम् - ........................

**V.** Change the following sentences into कर्मणि प्रयोगः, using only लङ् लकार forms.

उदा - सः ग्रन्थम् अपठत् । तेन ग्रन्थः अपठ्यत ।

१. प्रबन्धकः पानीयम् अपिबत् । ---- ----- -----
२. चोरः कण्ठहारम् अनयत् । ---- ----- -----
३. अनिरुद्धः पोलिकाम् अखादत् । ---- ----- ----
४. लक्ष्मणः आञ्जनेयम् अपश्यत् । ----- ----- ----
५. कृष्णः कर्णम् अकथयत् । ---- ----- -----
६. पाण्डवाः ज्येष्ठान् अस्मरन् । ---- ----- -----

७. जनाः नाटकानि अलिखन् । ---- ------ ------

८. एताः तान् अताडयन् । ------ ------ ------

९. वयम् एताः असूचयाम । ---- ------ --------

१०. ते जनान् अनिन्दन् । ------ --------- ------

**VI.** Using passive past participles change the following sentences into Passive voice.

उदा - सुनीशः आकाशं दृष्टवान् । सुनीशेन आकाशः दृष्टः ।

१. बालकः कथां पठितवान् । -----------------

२. ताः चर्चां कृतवत्यः । -------------------

३. ते वस्तूनि क्रीतवन्तः । -------------------

४. जनाः देवं पूजितवन्तः । -------------------

५. आपणिकः धनं दत्तवान् । -----------------

६. सा शय्यां प्रसारितवती । -------------------

७. के वाक्यानि लिखितवन्तः ? -------------------

८. सीता लतां पोषितवती । -------------------

(Answers on PNo - 237)

## २. व्यावहारिकशब्दावली

### पाकसम्बन्धिशब्दाः

| | | | |
|---|---|---|---|
| ओदनम् / अन्नम् | Rice | क्वथितम् | Sambar |
| सारः | Rasam | सूपः | Soup/Broth |
| तेमनम् | Broth made of butter milk | व्यञ्जनम् | Curry |
| कोषम्भरी | Kosambari | अवलेहः | Pickle |
| उपसेचनम् | Chutney | वटकम् | Vada |
| दाधिकम् | Curry made of curds | पर्पटः | Papad |

| | | | |
|---|---|---|---|
| अवदंशः - | Pungent fried snack | दध्योदनम् - | Curd rice. |
| चित्रान्नम् - | Mixed rice (with lemon etc.) | रोटिका - | Roti |
| ताक्रम् - | Prepared from butter milk | पूरिका - | Puri |
| तक्रम् - | Butter milk | यवागूः - | Porridge |
| पायसम् - | Payasam | पोलिका - | Holige |
| लड्डुकम् - | Laddu | कुण्डलिका - | Jilebi |
| मिष्टकम् - | Sweet meat | | |

## ३. चाटुश्लोकः

There was a teacher who had earned quite a reputation. His method of teaching came to light later. It was like this:

वाच्यतां समयोऽतीतः स्पष्टमग्रे भविष्यति ।
इति पाठयतां ग्रन्थे काठिन्यं कुत्र वर्तते ?

He was telling his pupils - "Read on. Time is over. Everything will be clear later." Where can there be any difficulty in a book that he teaches in this way ?

## ४. समस्या

In some riddles of Samskrit we find words that sound like those of some other language. However, on a closer look they are indeed Samskrit words ! For example, 'वार्धके यौवने वापि केसरीभात् विशिष्यते' The word केसरीभात् does not refer to the famous sweet dish though the meaning of the line seems to be 'In oldage or youth 'Kesaribath' is relished'. Actually, केसरीभात् should be split up as केसरी + इभात् । Now the line means 'Either in old age or youth the lion (केसरी) is superior to the elephant (इभ).

वार्धके यौवने वापि केसरी इभात् विशिष्यते ।।

# ५. सुभाषितम्

रत्नैर्महाब्धेस्तुतुषुर्न देवा
न भेजिरे भीमविषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं
न निश्चितार्थाद्विरमन्ति धीराः ।।१३।।

पदविभागः - रत्नैः, महाब्धेः, तुतुषुः, न, देवाः, न, भेजिरे, भीमविषेण, भीतिम्, सुधाम्, विना, न, प्रययुः, विरामम्, न, निश्चितार्थात्, विरमन्ति, धीराः ।

प्रतिपदार्थः - देवाः - Gods महाब्धेः रत्नैः न तुतुषुः - were not satisfied with the gems of the mighty ocean. भीमविषेण - Due to the terrible poison भीतिं न भेजिरे - they were not frightened. सुधां विना - Without nector (amṛta) विरामं न प्रययुः - they did not stop (churning the ocean). धीराः - The brave निश्चितार्थात् न विरमन्ति - do not swerve (stop) from their goal.

तात्पर्यम् - When they churned the ocean for nectar, the Gods were not pleased with the gems they secured from the ocean. Nor were they scared of the terrible poison. They churned and churned the ocean until they got nectar. Thus, determined persons do not stop till they reach their goal.

पापान्निवारयति योजयते हिताय
गुह्यं निगूहति गुणान् प्रकटीकरोति ।
आपद्गतं च न जहाति ददाति काले
सन्मित्रलक्षणमिदं प्रवदन्ति सन्तः ।।१४।।

पदविभागः - पापात्, निवारयति, योजयते, हिताय, गुह्यम्, निगूहति, गुणान्, प्रकटीकरोति, आपद्गतम्, च, न, जहाति, ददाति, काले, सन्मित्रलक्षणम्, इदम्, प्रवदन्ति, सन्तः ।

प्रतिपदार्थः - पापात् निवारयति - He prevents (you) from sin; हिताय

**योजयते** - he makes (you) do good deeds; **गुह्यं निगूहति** - he keeps a secret; **गुणान् प्रकटीकरोति** - he makes known (your) good qualities to others; **आपद्गतं च** - and when (you are) in distress **न जहाति** - he doesnot leave (you); **काले ददाति** - he offers help at the hour of need. **सन्तः** - Noblemen **इदं सन्मित्रलक्षणं प्रवदन्ति** - say that these are the characteristics of a good friend.

**तात्पर्यम्** - A good friend will always pull you out of the sinful path and put you on the beneficial path. He will keep your secrets while letting others know about your good qualities. When you are in trouble he will be by your side and will give you (money etc., which you want) at the hour of need. Pious men call these a true friend's characteristics.

## ६. पदसङ्ग्रहः

**दा** - to give

१. ददाति/यच्छति २. दीयते ३. दास्यति
४. दातव्यम् - दानीयम् ५. दत्तः - दत्ता - दत्तम् ६. दत्तवान् - दत्तवती ७. ददत्/यच्छन् - ददती/यच्छन्ती ८. दत्त्वा - प्रदाय ९. दातुम् ।

**क्रन्द** - to cry

१. क्रन्दति २. क्रन्द्यते ३. क्रन्दिष्यति
४. क्रन्दितव्यम् - क्रन्दनीयम् ५. क्रन्दितः - क्रन्दिता - क्रन्दितम्
६. क्रन्दितवान् - क्रन्दितवती ७. क्रन्दन् - क्रन्दन्ती ८. क्रन्दित्वा - आक्रन्द्य ९. क्रन्दितुम् ।

**पत्** - to fall

१. पतति २. पत्यते ३. पतिष्यति
४. पतितव्यम् - पतनीयम् ५. पतितः - पतिता - पतितम् ६. पतितवान् - पतितवती ७. पतन् - पतन्ती ८. पतित्वा - निपत्य ९. पतितुम् ।

**गै** - to sing

१. गायति २. गीयते ३. गास्यति

४. गातव्यम् - गानीयम् ५. गीतः - गीता - गीतम् ६. गीतवान् - गीतवती ७. गायन् - गायन्ती ८. गीत्वा - प्रगाय ९. गातुम् ।

## ७. काव्यकथा

### दशरथस्य शापः

दशरथः सम्यक् राज्यं परिपालयति स्म । किन्तु बहुकालं सः पुत्ररहितः आसीत् । अतः तस्य चिन्ता आसीत् । देवेन्द्रः देवलोकस्य नृपः । तस्य राजधानी अमरावती । राक्षसाः देवानां वैरिणः । ते देवलोकस्य आक्रमणं कृतवन्तः । देवाः भीताः । देवेन्द्रः दशरथस्य साहाय्यं प्रार्थितवान् । दशरथः देवलोकं गत्वा असुरैः सह युद्धं कृतवान् । युद्धे राक्षसाः पराजिताः । देवानां सौख्यं जातम् ।

कालः अतीतः । एकदा वसन्तमासे दशरथः मृगयां कर्तुं वनं गतवान् । वने हिंस्राः प्राणिनः आसन् । नृपः अनेकान् प्राणिनः हतवान् । अन्ते दशरथः रात्रौ वने एव विश्रान्तिं स्वीकृतवान् ।

प्रातः दशरथः अश्वम् आरूढवान् । तमसानदीतीरं गतवान् । नदीतीरे तपस्विकुमारः आसीत् । सः कुम्भे जलं पूरयति स्म । नृपः दूरात् तं शब्दं श्रुतवान् । गजस्य शब्दः इति सः चिन्तितवान् । गजं हन्तुं बाणं विसृष्टवान् । बाणः तपस्विकुमारम् अताडयत् । कुमारः 'हा ! तात !' इति क्रन्दनं कृतवान् । नृपः तस्य समीपं गतवान् । बाणाहतं तं दृष्ट्वा नृपः अतीव दुःखितः । पतितं तपस्विकुमारम् आश्रमं नीतवान् । तत्र वृद्धौ दम्पती आस्ताम् । तपस्विकुमारः मृतः । मृतं पुत्रं दृष्ट्वा वृद्धः कुपितः । दशरथाय 'पुत्रशोकात् तवापि मरणं भविष्यति' इति शापं दत्तवान् । शापं श्रुत्वा

दशरथः दुःखितः अभवत् । 'पुत्रः भविष्यति' इति सन्तुष्टः अपि अभवत् । तथापि शापभारेण सह दशरथः राजधानीं प्रत्यागतवान् ।

## DAŚARATHA'S CURSE

Daśaratha was ruling the kingdom well. But he did not have children for a long time. Hence he was worried.

Devendra was the king of heaven. His capital was Amarāvathi. Demons were the enemies of gods. They attacked heaven. The Gods were frightened. Devendra asked for Daśaratha's help. Daśaratha went to heaven and waged war against the demons. The demons were defeated in the battle. The Gods were happy.

Time passed. Once during (the month of) spring Daśaratha went to the forest for hunting. There were cruel animals in the forest. The king killed many animals. At last he took rest at night in the forest.

The next morning he mounted the horse. He came to the bank of the river Tamasa. There was the son of an ascetic on the bank of the river, who was filling his pot with water. The king heard that sound from a distance. He thought that it was the sound of an elephant. To kill the elephant he discharged an arrow. The arrow struck the ascetic's son. The ascetic's son cried "Oh! Father." The king went near him. On seeing him struck by (his) arrow, the king felt extremely sorry. He took the ascetic's son to the hermitage. There was an old couple there. The ascetic's son died. Seeing his son die the aged ascetic got angry. He cursed Daśaratha - "You will also die of sorrow on account of your son.' The king was

grieved to hear this curse, but also felt happy that he would have a son. Yet, with the burden of this curse, Daśaratha returned to his capital.

**एतेषाम् उत्तरं लिखत ।**

१. किमर्थं दशरथस्य चिन्ता आसीत् ?

२. दशरथः किमर्थं देवलोकं गतवान् ?

३. मृगयायां दशरथः किं कृतवान् ?

४. नृपः दूरात् कं शब्दं श्रुतवान् ?

५. शापं श्रुत्वा दशरथस्य दुःखं सन्तोषः च किमर्थम् अभवत् ?

**(Answers on PNo - 237)**

## ८. अन्वयक्रमः

स जगाम वनं वीरो रामपादप्रसादकः ।
गत्वा तु स महात्मानं रामं सत्यपराक्रमम् ।।
अयाचद् भ्रातरं राममार्यभावपुरस्कृतः ।
त्वमेव राजा धर्मज्ञ इति रामं वचोऽब्रवीत् ।।

**पदविभागः** - रामम् + आर्यभावपुरस्कृतः, त्वम् + एव, धर्मज्ञः + इति, वचः + अब्रवीत्. The remaining words in the sloka are single words.

**अन्वयः** - Following the steps taught in the previous lesson try to write the अन्वय of the verse.

1. Identify the verbs first. They are

   १. जगाम २. अयाचत् ३. (असि) ४. अब्रवीत्

   The verb असि is not found in the sloka but supplied to complete the sense. This feature is known as अध्याहार ।

2. According to the verbs the words in different vibhaktis can be grouped as under.

| विभक्तिः | क्रियापदानि | | | |
|---|---|---|---|---|
| | जगाम | अयाचत् | (असि) | अब्रवीत् |
| प्रथमा | रामपादप्रसादकः वीरः, सः | आर्यभावपुरस्कृतः सः | धर्मज्ञः त्वम्, राजा | (सः) |
| द्वितीया | वनम् भ्रातरम्, रामम् | महात्मानम्, सत्यपराक्रमम् रामम् | — | वचः |
| क्त्वान्तम् | -- | गत्वा | -- | -- |

3. When we put the above words in prose order we get the अन्वय in the following sentences. The indeclinables इति and तु have to be put in appropriate places.

१. रामपादप्रसादकः वीरः सः वनं जगाम ।

२. आर्यभावपुरस्कृतः सः गत्वा तु सत्यपराक्रमं महात्मानं भ्रातरं रामम् अयाचत् ।

३. धर्मज्ञः त्वम् एव राजा (असि) इति (सः) रामं वचः अब्रवीत् ।

(In this sentence the third and fourth verbs are combined.)

**प्रतिपदार्थः** – वीरः सः – The brave (Bharata), रामपादप्रसादकः - who brought joy to Rāma's feet, जगाम - went, वनं - to the forest. आर्यभावपुरस्कृतः सः - He, the virtuous, गत्वा - having gone there, अयाचत् - begged, रामम् - Rāma, भ्रातरम् – his brother, सत्यपराक्रमम् - whose valour would never go futile, महात्मानम् - (and) who was a pious soul. (सः) अब्रवीत् - He spoke, वचः – the words, "त्वम् एव - only you, धर्मज्ञः - who knows Dharma, राजा (असि) – is the king", इति - thus.

**तात्पर्यम् –** Bharata not only refused to ascend the throne but also went to where Rāma was, to persuade him to come back and rule the kingdom. He went and fell at the feet of Rāma. This humble gesture of Bharata brought pleasure to Rāma also.

Having fallen at his feet, in all humility Bharata made this request - "You are my elder brother. You know what is right and what is wrong. It is the right of the eldest son to ascend the throne after the father. So, you are the rightful heir to the throne".

What a noble soul he was ! He had no desire for the regal glory. At a poignant moment like this his wisdom and nobility found expression in this gesture. Although the kingdom was offered to him without even his dreaming of it, he declined the offer. He knew that Rama the eldest son who was endowed with all the good qualities that a king had to possess, was afterall the उत्तराधिकारी । No other thought came to his mind. He went over to the forest with the confidence that he would bring Rāma back.

## १. अनुवादपद्धतिः

You know that Past Participles (भूतकृदन्ताः) are used in place of verbal forms in Past tense.

Eg. अपठत् - पठितवान् / वती / वत्
अलिखत् - लिखितवान् / वती / वत्
अकरोत् - कृतवान् / वती / वत्
अगच्छत् - गतवान् / वती / वत्

For the language to be simple it is advisable to use past participles. They can be used without making a single mistake. With practice you can get greater command over the language.

You already know that the augment letter 'अ' should precede the verb in Past tense. Extreme care must be taken if the same verb comes after a preposition. Because the augment 'अ' comes before the verb root and after the preposition and not before the preposition. प्र+हरति - प्रहरति is a verb in Present tense. When changed into Past tense the letter 'अ' comes after प्र. प्र+अहरत् -

प्राहरत् is the correct form in past tense. (अप्रहरत् is wrong.) Observe a few other examples.

| **Present** | **Past (लङ्लकारः)** | **Past Participle** |
|---|---|---|
| विहरति - strolls merrily | वि+अहरत् = व्यहरत् | विहृतवान् |
| संहरति - kills | सम्+अहरत् = समहरत् | संहृतवान् |
| स्वीकरोति - receives | स्वी+अकरोत् = स्व्यकरोत् | स्वीकृतवान् |
| उपविशति - sits | उप+अविशत् = उपाविशत् | उपविष्टवान् |
| उत्तिष्ठति - stands up | उत्+अतिष्ठत् = उदतिष्ठत् | उत्थितवान् |
| प्रक्षालयति - washes,cleanses | प्र+अक्षालयत् = प्राक्षालयत् | प्रक्षालितवान् |
| आगच्छति - comes | आ+अगच्छत् = आगच्छत् | आगतवान् |
| उदाहरति - quotes, gives an example | उत्+आ+अहरत् = उदाहरत् | उदाहृतवान् |
| प्राप्नोति - obtains | प्र+आप्नोत् = प्राप्नोत् | प्राप्तवान् |
| अङ्गीकरोति - accepts | अङ्गी+अकरोत् = अङ्ग्यकरोत् | अङ्गीकृतवान् |

This shows that the use of Past participle forms is easy.

I) Write the Past tense and Past participle forms of the following verbs.

उदा - परि + गणयति = परि + अगणयत् = पर्यगणयत्, परिगणितवान्

१. परि + हरति = ...... + ...... = .......... ..........

२. प्रति + आ + गच्छति = ...... + ...... = ...... .......
३. प्र + विशति = ...... + ...... = .......... ..........
४. आ + नयति = ...... + ...... = .......... ..........
५. परि + णयति = ...... + ...... = .......... ..........
६. प्र + वर्तते = ...... + ...... = .......... ..........
७. नि + वर्तते = ...... + ...... = .......... ..........
८. सं + चरति = ...... + ...... = .......... ..........
९. सं + तुष्यति = ...... + ...... = .......... ..........
१०. प्र + भवति = ...... + ...... = .......... ..........

## १०. सन्धिः

### ६. यान्तवान्तादेशसन्धिः

Study the following examples of Sandhi.

१. बालकस्य **क्षीरयिच्छा** एव नास्ति ।
२. भोः राम ! **तस्मायेतत्** देहि ।
३. गुरुः शिष्यम् आदिशत् - '**भानविह** आगच्छ' इति ।
४. लवकुशौ **सूर्यचन्द्राविव** शोभेते ।

The bold words above are split as follows.

१. क्षीरयिच्छा = क्षीरे + इच्छा (ए + इ = अय् + इ)
२. तस्मायेतत् = तस्मै + एतत् (ऐ + ए = आय् + ए)
३. भानविह = भानो + इह (ओ + इ = अव् + इ)

---

**अनुवादपद्धतिः**

I.१. परि + अहरत् = पर्यहरत्, परिहृतवान् २. प्रति + आ + अगच्छत् = प्रत्यागच्छत्, प्रत्यागतवान् ३. प्र + अविशत् = प्राविशत्, प्रविष्टवान् ४. आ + अनयत् = आनयत्, आनीतवान् ५. परि + अनयत् = पर्यणयत्, परिणीतवान् ६. प्र + अवर्तत = प्रावर्तत, प्रवर्तितवान् ७. नि + अवर्तत = न्यवर्तत, निवर्तितवान् ८. सम् + अचरत् = समचरत्, सञ्चरितवान् ९. सम् + अतुष्यत् = समतुष्यत्, सन्तुष्टवान् १०. प्र + अभवत् = प्राभवत्, प्रभूतवान्

४. सूर्यचन्द्राविव = सूर्यचन्द्रौ + इव (औ + इ = आव् + इ)

If ए, ऐ, ओ and औ are followed by any vowel ए is replaced by अय्, ऐ by आय्, ओ by अव् and औ by आव्.

In अय् and आय् the ending letter is य्. So they are यान्तs and in अव् and आव् the ending letter is व्. So, they are called वान्तs. Since यान्त and वान्त आदेश-s take the place of ए, ऐ and ओ, औ respectively, this is called यान्तवान्तादेशसन्धिः ।

If ए and ओ happen to be पदान्त and are followed by 'अ'(ह्रस्व-अकार) then there will be पूर्वरूपसन्धिः । In the rest of the instances there will be यान्तवान्तादेशसन्धिः only.

The following are examples of this Sandhi.

१. हरे + ए = हरये (ए + ए = अय् + ए)
२. विष्णो + ए = विष्णवे (ओ + ए = अव् + ए)
३. तस्यै + अस्तु = तस्यायस्तु (ऐ + अ = अय् + अ)
४. देवौ + इति = देवाविति (औ + इ = आव् + इ)
५. कटे + उपविशति = कटयुपविशति (ए + उ = अय् + उ)
६. प्रभाते + उत्तिष्ठति = प्रभातयुत्तिष्ठति (ए + उ = अय् + उ)
७. गृहे + आसीत् = गृहयासीत् (ए + आ = अय् + आ)
८. स्थूलौ + एतौ = स्थूलावेतौ (औ + ए = आव् + ए)

## अभ्यासः

**I.** As shown in the example, split the words given below.

उदा - चोरावागतौ = चोरौ + आगतौ (औ + आ = आव् + आ)

१. तावेकदा २. पुत्राविति ३. गुरावुत्साहः
४. नरावुदारौ ५. करावेतौ ६. बालकावागतौ
७. तस्यायिदम् ८. हरावागते ९. चतुरावुत्साहिनौ
१०. तस्यायेतस्यै

**II.** Join the following words.

१. विष्णोः + ए २. नै + अकः ३. देवतायै + अर्पणम्
४. प्रातःकाले + उत्थानम् ५. सुखे + अनिच्छा ६.अभ्यागतौ + आगतौ
७. श्रुते + एतस्मिन् ८. गृहे + आसीत् ९. वृक्षौ + आरोपितौ
१०. जनौ + आहूतौ

**(Answers on PNo - 237)**

## ११. सङ्ख्याविषयाः

**Famous eights**

अष्ट दिक्पालकाः - इन्द्रः, अग्निः, यमः, निर्ऋतिः, वरुणः, वायुः, कुबेरः, ईशानः ।

अष्ट दिग्गजाः - ऐरावतः, पुण्डरीकः, वामनः, कुमुदः, अञ्जनः, पुष्पदन्तः, सार्वभौमः, सुप्रतीकः ।

अष्ट सिद्धयः - अणिमा, महिमा, गरिमा, लघिमा, प्राप्तिः, प्राकाम्यम्, ईशित्वम्, वशित्वम् ।

अष्ट मङ्गलानि - सिंहः, वृषभः, गजः, कलशः, व्यजनम्, ध्वजः, भेरी, दीपः ।

**अष्टाङ्गनमस्कारः** - Prostrating with the chest, head, eyes, mind, feet, hands and ears touching the ground while uttering the word 'नमः' ।

**Tradition**

Salutation to (गोमाता) the Sacred cow

गावो ममाग्रतः सन्तु गावो मे सन्तु पृष्ठतः ।
गावो मे हृदये नित्यं गवां मध्ये वसाम्यहम् ।।

Let there be cows in front of me, behind me and in my heart always. I live amidst cows.

# परिचयः - सप्तमः पाठः

## प्रश्नाः

I. Answer the following in Samskrit.

१. देवाः कैः तृप्तिं न प्राप्तवन्तः ?

२. केन देवाः भीतिं न प्राप्तवन्तः ?

३. धीराः कस्मात् न विरमन्ति ?

४. सन्मित्रं किं निगूहति ? किं च प्रकटीकरोति ?

II. Split the following words.

१. तमादिशदच्युतः ।

२. गमिष्यामीत्युवाच ।

३. स तामसहायामरक्षत् ।

४. रवेरुदयोऽभवदित्यवगतवान् ।

५. सुहृदमागच्छन्तमपश्यन्नारायणः ।

६. पुत्रो भवतीति स सन्तुष्टोऽभवत् ।

III. Translate into Samskrit using participle forms (क्तप्रत्ययान्ताः) for verbs.

1. God was saluted by him.
2. The thief was caught by policemen.
3. Sentences were written by me.
4. Dharma was followed by the people.
5. A boon was given by God.

(**Note:** Answers for the above exercises are given in the end of this book on PNO - 237. After completing the exercises check your answers.)

## परिचयः - अष्टमः पाठः

।। अल्पाक्षररमणीयं यः कथयति निश्चितं स खलु वाग्मी ।।
He who can convey his message charmingly in a few words, is indeed an orator.

### १. भाषाभ्यासः

### कर्मणिप्रयोगः-लोट्लकारः

Observe the following sentences.

१. त्वया गृहं **गम्यताम्** । = Going home should be done by you. (You should go home.)
२. सीतया ग्रन्थः **पठ्यताम्** । = Let the epic be read by Sītā.
३. सेवकेन भारः **उह्यताम्** । = Let the weight be lifted by the servant.
४. बालेन रसः **स्वाद्यताम्** । = Let the juice be tasted by the boy.
५. भवद्भिः कार्यं **क्रियताम्** । = Let the work be done by you (all).
६. अस्माभिः चित्राणि **दृश्यन्ताम्** । = Let the pictures be seen by us.
७. तैः फलानि **खाद्यन्ताम्** । = Let the fruits be eaten by them.
८. भारतेन विजयः **प्राप्यताम्** । = Let victory be attained by Bharata.
९. सर्वैः संस्कृतं **स्मर्यताम्** । = Let Samskrit be remembered by all.

१०. भवता स्वागतभाषणं **क्रियताम्** । = Let the welcome speech be given by you.

All the above sentences are in the Passive voice and Imperative mood आज्ञार्थकः (लोट्लकारः). As you are familiar with the general rules of कर्मणिप्रयोगः, let us concentrate on the passive forms of the verb in the Imperative mood.

Rules of passive verbs in लोट् लकार -

1. If you know the active imperative(लोट् लकार) form of an Atmanepadi root you can easily derive its Passive imperative form.

   उदा - लट् - वन्दते लोट् - वन्दताम् Similarly,

   पठ्यते - पठ्यताम्
   लिख्यते - लिख्यताम्
   स्वीक्रियते - स्वीक्रियताम्
   उह्यते - उह्यताम्
   स्मर्यते - स्मर्यताम्

2. Imperative mood forms also have 'य' in passive.

   उदा - पठ्**य**ताम्, लिख्**य**ताम्, ज्ञा**य**ताम्, श्रू**य**ताम्

3. The passive forms are conjugated just like the active forms of the verb in लोट् आत्मनेपदी । (उदा - वन्दताम्, वन्देताम्, वन्दन्ताम्)

| उदा - | | | | |
|---|---|---|---|---|
| | पठ्यते - | पठ्यताम् | पठ्येताम् | पठ्यन्ताम् । |
| | गम्यते - | गम्यताम् | गम्येताम् | गम्यन्ताम् । |
| | दृश्यते - | दृश्यताम् | दृश्येताम् | दृश्यन्ताम् । |
| | स्पृश्यते - | स्पृश्यताम् | स्पृश्येताम् | स्पृश्यन्ताम् । |
| | पच्यते - | पच्यताम् | पच्येताम् | पच्यन्ताम् । |
| | लिख्यते - | लिख्यताम् | लिख्येताम् | लिख्यन्ताम् । |

4. The usage of passive verbs in the second and third persons in imperative mood is rare. Because, generally any command has its object (कर्मपदम्) in the third person only. (Hence, the forms

of मध्यमपुरुष and उत्तमपुरुष are not given here.)

5. Some Imperative forms.

| | कर्तरि प्रयोगे | कर्मणि प्रयोगे |
|---|---|---|
| (परस्मैपदी) | पठतु | पठ्यताम् |
| (परस्मैपदी) | लिखतु | लिख्यताम् |
| (परस्मैपदी) | जानातु | ज्ञायताम् |
| (परस्मैपदी) | शृणोतु | श्रूयताम् |
| (आत्मनेपदी) | वन्दताम् | वन्द्यताम् |
| (आत्मनेपदी) | ईक्षताम् | ईक्ष्यताम् |

## अभ्यासः

**I.** Write the passive Impertive forms (लोट्लकार) of the following Present tense forms as shown in the example.

उदा - गम्यते - गम्यताम्

१. ताड्यते - ............ २. वन्द्यते - ............
३. नीयते - ............ ४. पीयते - ............
५. श्रूयते - ............ ६. त्यज्यते - ............
७. गम्यते - ............ ८. दृश्यते - ............
९. ज्ञायते - ............ १०. दीयते - ............

**II.** For the following Active Present forms write the corresponding Passive Present (लट्) forms and Passive Imperative (लोट्) forms as shown in the example.

उदा - पठति - पठ्यते पठ्यताम्

१. लिखति - ............ ............ ।
२. खादति - ............ ............ ।
३. पिबति - ............ ............ ।
४. निन्दति - ............ ............ ।
५. क्षालयति - ............ ............ ।
६. स्मरति - ............ ............ ।

७. पश्यति - ............ ............ ।
८. गच्छति - ............ ............ ।
९. नमति - ............ ............ ।
१०. पचति - ............ ............ ।

**III.** For the following Active Imperative forms write the corresponding Passive Imperative forms as shown in the example.

उदा - कथयतु - कथ्यताम्

| | |
|---|---|
| १. गृह्णातु - ------- | २. त्यजतु - ------ |
| ३. शृणोतु - ------- | ४. पश्यतु - ------ |
| ५. स्थापयतु - ------- | ६. पृच्छतु - ------ |
| ७. रक्षतु - ------- | ८. नयतु - ------ |
| ९. गच्छतु - ------- | १०. मार्जयतु - ------ |

**IV.** Using Imperative verbs (लोट् लकारः) change the following sentences from कर्तरि प्रयोगः to कर्मणि प्रयोगः ।

उदा - नृपः देशं रक्षतु । - नृपेण देशः रक्ष्यताम् ।

१. सः धर्मं पालयतु । ----- ----- ----- ।
२. बालकः गृहपाठं लिखतु । ----- ----- ----- ।
३. ललिता रङ्गवल्लीं लिखतु । ----- ----- ----- ।
४. गीता प्रार्थनां गायतु । ----- ----- ----- ।
५. सुशीलः स्वच्छतां करोतु । ----- ----- ----- ।
६. सन्देशः अमृतवचनं पठतु । ----- ----- ----- ।
७. गिरिजा देवं पूजयतु । ----- ----- ----- ।
८. भवती पात्राणि क्षालयतु । ----- ----- ----- ।
९. भवान् देवान् नमतु । ----- ----- ----- ।
१०. देवः भक्तं रक्षतु । ----- ----- ----- ।

**V.** In the sentences given below there are errors related to the number(वचनम्) in the underlined words. Correct them and rewrite the sentences. (Make necessary correction in the

verb(क्रियापदम्) or object(कर्मपदम्))

उदा - रक्षकेण गृहं रक्ष्यन्ताम् ।
रक्षकेण गृहाणि रक्ष्यन्ताम् ।

१. पुत्रेण गृहपाठाः क्रियताम् ।
२. भवत्या पायसं खाद्यन्ताम् ।
३. छात्रैः प्रश्नाः पृच्छ्यताम् ।
४. भवद्भिः जलं नीयन्ताम् ।
५. रजकैः वस्त्राणि क्षाल्यताम् ।
६. अस्माभिः कार्यं क्रियेताम् ।
७. पितामहेन रामायणं पठ्येताम् ।
८. छात्रैः उत्तराणि लिख्यताम् ।
९. छात्रैः दुर्गुणाः त्यज्यताम् ।
१०. महिलाभिः पुष्पं ध्रियन्ताम् । (Answers on PNo - 238)

## २. व्यावहारिकशब्दावली

## पक्षिणः, कीटादयः च

### पक्षिणः

काकः - Crow
कपोतः - Pigeon, Dove
मयूरः - Pea-cock
हंसः - Swan
दार्वाघाटः - Wood-pecker
बकः - Crane
श्येनः - Eagle
गृध्रः - Vulture
उलूकः - Owl
कारण्डवः - Duck
जतुका - Bat

### कीटादयः

मक्षिका - House fly
मधुमक्षिका - Honey-bee
वरटा - Wasp
मत्कुणः - Bug
यूकः - Louse
मशकः - Mosquito
पिपीलिका - Ant
भ्रमरः - Bee
चित्रपतङ्गः - Butterfly
शलभः - Grass-hopper/Moth

पुत्तिका - White-ant/Termite ऊर्णनाभः - Spider
तैलपः - Cockroach वृश्चिकः - Scorpion
शतपदी - Centipede किञ्चुलकः - Earth worm
शम्बूकः - Snail कर्कटकः - Crab

## ३. चाटुश्लोकः

Monkeys are naturally restless. Monkey - tricks (कपिचेष्टाः) are well - known. What will happen if a monkey is provoked ? Similarly, a person who is already crooked and on top of it, has vices also, will behave erratically.

मर्कटस्य सुरापानं मध्ये वृश्चिकदंशनम् ।
तन्मध्ये भूतसञ्चारः यद्वा तद्वा भविष्यति ।

First of all it is a monkey ! It is made to drink liquor ! A scorpion has bitten it ! On top of it, it is possessed by a goblin ! Anything may happen !!

## ४. समस्या

Some riddles have the answer hidden in them. If the words of interrogative sentences are either split or jointly read, we get the answers. Following is a verse comprising of four questions. Try to find the answers hidden right there.

किं नरः कुरुते गानम् ? कं कं पुष्णाति जाङ्गलम् ?
काऽमितार्थप्रदा देवगवी ? किं शुकवत् वनम् ?

Who is the person who sings ? Whom does meat nourish ? Which divine cow yields unlimited desired objects ? Which forest has parrots ?

**(Answer on PNO - 155)**

## ५. सुभाषितम्

लभेत सिकतासु तैलमपि यत्नतः पीडयन्
पिबेच्च मृगतृष्णिकासु सलिलं पिपासार्दितः ।

कदाचिदपि पर्यटन् शशविषाणमासादयेत्
न तु प्रतिनिविष्टमूर्खजनचित्तमाराधयेत् ।।१५।।

**पदविभागः**- लभेत, सिकतासु, तैलम्, अपि, यत्नतः, पीडयन्, पिबेत्, च, मृगतृष्णिकासु, सलिलम्, पिपासार्दितः, कदाचित्, अपि, पर्यटन्, शशविषाणम्, आसादयेत्, न, तु, प्रतिनिविष्टमूर्खजनचित्तम्, आराधयेत् ।

**प्रतिपदार्थः** - यत्नतः पीडयन् - A person who is crushing with some effort, लभेत - might get तैलम् - oil सिकतासु अपि - from sand also. पिपासार्दितः - A thirsty man पिबेत् च - might drink सलिलम् - water मृगतृष्णिकासु - in mirages. कदाचित् - Sometime पर्यटन् - a wanderer आसादयेत् - might find शशविषाणम् - a hare's horn. तु - But, न आराधयेत् - one cannot please प्रतिनिविष्टमूर्खजनचित्तम् - the mind of a stubborn fool.

**तात्पर्यम्** - Crushing sand with effort one might find oil in it. Perhaps a thirsty person will drink water from a mirage. Sometimes while wandering one might find the horn of a hare. All these impossible things may become possible. But, it is not possible to please an obstinate fool.

व्याघ्रीव तिष्ठति जरा परितर्जयन्ती
रोगाश्च शत्रव इव प्रहरन्ति देहम् ।
आयुः परिस्रवति भिन्नघटादिवाम्भः
लोकस्तथाप्यहितमाचरतीति चित्रम् ।।१६।।

**पदविभागः** - व्याघ्री, इव, तिष्ठति, जरा, परितर्जयन्ती, रोगाः, च, शत्रवः, इव, प्रहरन्ति, देहम्, आयुः, परिस्रवति, भिन्नघटात्, इव, अम्भः, लोकः, तथा, अपि, अहितम्, आचरति, इति, चित्रम् ।

**प्रतिपदार्थः** - व्याघ्री इव - Like a tigress जरा - oldage परितर्जयन्ती तिष्ठति - stands (infront) threatening; शत्रवः इव - like enemies रोगाः च - diseases देहम् प्रहरन्ति - strike the body; भिन्नघटात् अम्भः इव - like water from a cracked pot आयुः परिस्रवति - life slips away

(literally - leaks out); तथा अपि - Inspite of all this लोकः - the people अहितम् आचरति - do undesirable things. इति चित्रम् - This is strange !

**तात्पर्यम्** - Old age frightens man like a tigeress. Diseases strike the body like enemies. Like water leaking from a broken pot life is spent. Yet people think of harming others. They do not realise that their life is getting shorter day by day. Instead of earning merit(puṇya) they indulge in harmful deeds. This behaviour of men is strange indeed.

## ६. पदसङ्ग्रहः

**सूच्** - to indicate/inform/give message

१. सूचयति २. सूच्यते ३. सूचयिष्यति
४. सूचयितव्यम् - सूचनीयम् ५. सूचितः - सूचिता - सूचितम्
६. सूचितवान् - सूचितवती ७. सूचयन् - सूचयन्ती ८. सूचयित्वा - संसूच्य ९. सूचयितुम् ।

**अर्च्** - to worship

१. अर्चति २. अर्च्यते ३. अर्चिष्यति
४. अर्चितव्यम् - अर्चनीयम् ५. अर्चितः - अर्चिता - अर्चितम्
६. अर्चितवान् - अर्चितवती ७. अर्चन् - अर्चन्ती ८. अर्चित्वा - समर्च्य ९. अर्चितुम् ।

**ईक्ष्** - to see

१. ईक्षते २. ईक्ष्यते ३. ईक्षिष्यते
४. ईक्षितव्यम् - ईक्षणीयम् ५. ईक्षितः - ईक्षिता - ईक्षितम्
६. ईक्षितवान् - ईक्षितवती ७. ईक्षमाणः - ईक्षमाणा ८. ईक्षित्वा - समीक्ष्य ९. ईक्षितुम् ।

**ऊह्** - to guess

१. ऊहते २. ऊह्यते ३. ऊहिष्यते
४. ऊहितव्यम् - ऊहनीयम् ५. ऊहितः - ऊहिता - ऊहितम्
६. ऊहितवान् - ऊहितवती ७. ऊहमानः - ऊहमाना ८. ऊहित्वा - समुह्य ९. ऊहितुम् ।

# ७. काव्यकथा

## रामायणम्

दशरथः अपुत्रः । शापः अनुग्रहः एव जातः तस्य ।

रावणः राक्षसराजः । स देवान् पीडयति स्म । देवाः विष्णुसमीपं गतवन्तः । विष्णुः कथितवान् - 'रावणवधार्थं दशरथस्य पुत्रो भविष्यामि' इति । ततः दशरथस्य रामः, लक्ष्मणः, भरतः, शत्रुघ्नः इति चत्वारः पुत्राः अभवन् । सर्वे सकलाः विद्याः अधीतवन्तः । रामलक्ष्मणौ यागरक्षणार्थं विश्वामित्रेण सह आश्रमं गतवन्तौ । यज्ञरक्षणानन्तरं रामः अहल्याम् उद्धृतवान् । ततः तौ विश्वामित्रेण सह मिथिलां प्राप्तवन्तौ । रामः जनकराजस्य सभायां शिवधनुषः भङ्गं कृतवान् । ततः रामस्य लक्ष्मणस्य भरतस्य शत्रुघ्नस्य च विवाहः जातः । सर्वे अयोध्यां प्रत्यागतवन्तः । मार्गे रामः परशुरामस्य गर्वभङ्गं कृतवान् ।

ततः रामस्य यौवराज्याभिषेकार्थं दशरथः सन्नाहं कृतवान् । किन्तु कैकेयीवचनात् रामः लक्ष्मणेन सीतया च सह अरण्यं गतवान् । दशरथस्य अवसानम् अभवत् । मातुलगृहात् आगतः भरतः श्रीरामसमीपं गत्वा पादुके आनीतवान् । ततः दण्डकारण्ये शूर्पणखाप्रसङ्गात् क्रुद्धः रावणः सीताम् अपहृतवान् । ततः किष्किन्धासमीपे रामसुग्रीवयोः सख्यम् अभवत् । रामः वालिनं संहृतवान् । आञ्जनेयः लङ्कायां सीतां दृष्ट्वा वृत्तान्तं निवेदितवान् । रामः समुद्रस्य सेतुं बद्ध्वा लङ्कां गतवान् । रावणस्य वधं च कृतवान् ।

ततः विमानेन श्रीरामः लक्ष्मणेन सीतया च सह अयोध्याम् आगतवान् । रामस्य पट्टाभिषेकः अभवत् । किन्तु सीतायाः विषये जनापवादं श्रुत्वा रामः सीतापरित्यागं कृतवान् । वाल्मीकेः आश्रमे सीता कुशलवौ प्रसूतवती । कुशलवौ वाल्मीकेः सकाशात् रामायणं पठितवन्तौ । श्रीरामः अश्वमेधयागं कृतवान् । तदा कुशलवौ रामायणं गीतवन्तौ । ततः रामः वाल्मीकिमुनेः आश्रमम् आगतवान् । वाल्मीकिमुनिः सीतां परिग्रहीतुं कथितवान् । श्रीरामः -''पुनः सर्वेषां पुरतः 'अहं शुद्धा' इति सीता कथयतु'' इति उक्तवान् । इदं श्रुत्वा सीता खिन्ना । तत्क्षणे भूमौ बिलं जातम् । सीता तत्र लीना । रामादयः सरयूनद्यां देहत्यागं कृतवन्तः । अनन्तरं कुशः नृपः अभवत् ।

## Rāmāyaṇa

Daśaratha was childless although this curse turned into a boon for him.

Rāvaṇa was the king of the demons. He was troubling the gods. The gods approached Viṣṇu. Viṣṇu said - "to kill Rāvaṇa, I shall be born as the son of Daśaratha." Then Daśaratha got four sons: Rāma, Lakṣmaṇa, Bharata and Śatṛghna. They all learnt all the customs. Rāma and Lakṣmaṇa went with Viśvamitra to his hermitage to guard his sacrifice. Having guarded the sacrifice Rāma revived Ahalyā. Then both of them along with Viśvamitra got to Mithila. Rāma broke the bow of Śiva in the court of Janaka. Then the marriage of Rāma, Lakṣmaṇa, Bharatha and Śatṛghna took place. All returned to Ayodhyā. On the way Rāma subdued the pride of Paraśurama.

Then Daśaratha made preparations for the coronation of Rāma as the crown - prince. But by Kaikeyi's intervention, Rāma along with Lakṣmaṇa and Sītā, went to the forest. Daśaratha died. Returning from his maternal uncle's place, Bharata went to Rāma and brought his sandals. Then, in the Daṇḍaka forest, enraged by the incident with Sūrpaṇakha, Rāvaṇa abducted Sītā. Then near Kiśkindha, Rāma and Sugrīva became friends. Rāma killed Vāli. Ānjaneya found Sītā in Lanka and informed Rāma. Rāma built a bridge across the ocean, and went to Lanka. And he killed Rāvaṇa.

Thereafter Rāma, along with Lakṣmaṇa and Sītā came to Ayodhyā by an aircraft. Rāma's coronation took place. But on hearing some rumour about Sītā, Rāma abandoned Sītā. In the hermitage of Vālmīki, Sītā gave birth to Kuśa and Lava. Kuśa and Lava learnt the Rāmāyaṇa from Valmiki. Rāma performed the Horse-sacrifice. At that time Lava and Kuśa sang the Rāmāyaṇa. Then Rāma came to Vālmīki's hermitage. Vālmīki asked him to accept Sītā. Sri Rāma said "Let her declare before every one that she is pure". Hearing this Sītā became sad. At that instant the earth

opened up. Sītā disappeared into the earth. Rāma and others left their bodies to the river Sarayū. Then Kuśa became king.

**एतेषाम् उत्तरं लिखत ।**

१. रामलक्ष्मणौ किमर्थं विश्वामित्रेण सह आश्रमं गतवन्तौ ?
२. रामः जनकराजस्य सभायां किं कृतवान् ?
३. रामसुग्रीवयोः सख्यं कुत्र अभवत् ?
४. कस्य आश्रमे सीता लवकुशौ प्रसूतवती ?
५. श्रीरामः कं यागं कृतवान् ? **(Answers on PNo - 238)**

## ८. अन्वयक्रमः

रामोऽपि परमोदारः सुमुखः सुमहायशाः ।
न चैच्छत् पितुरादेशाद्राज्यं रामो महाबलः ।।

**पदविभागः** - रामः + अपि, च + ऐच्छत्, पितुः + आदेशात् + राज्यम्
Write the remaining पदविभाग yourself.

**अन्वयः** - क्रियापदम् - ऐच्छत् is the only verb.
प्र - रामः, परमोदारः, सुमुखः, सुमहायशाः, महाबलः
द्वि - राज्यम् पं - आदेशात्
ष - पितुः (अव्ययम् - अपि, न)

Prose order - परमोदारः, सुमुखः, सुमहायशाः, महाबलः रामोऽपि पितुः आदेशात् राज्यं न ऐच्छत् ।

**प्रतिपदार्थः** - रामोऽपि - Rāma also, परमोदारः - who was magnanimous, सुमुखः - had a charming face, सुमहायशाः - was very famous, महाबलः - and was very strong, न ऐच्छत् - did not want, राज्यम् - the kingdom, पितुः आदेशात् - on account of his father's command.

**तात्पर्यम्** - Bharata knew that the kingdom rightfully belonged to the eldest son and hence he did not take it. But, Rāma had come away to the forest to see that his father kept his promise to Kaikeyi who had asked that Rāma should not be crowned, but must be

exiled. When that was the case, Rāma would not agree to go back to the kingdom without fulfilling his vow. Daśaratha had seen Rāma leave for the forest. But he was helpless and could not stop him. Bharata's request could not make Rāma swerve from his vow of पितृवाक्यपालनम् । Hence, Rāma would not agree to go back and rule the kingdom.

पादुके चास्य राज्याय न्यासं दत्त्वा पुनः पुनः ।
निवर्तयामास ततो भरतं भरताग्रजः ।।

**पदविभागः** - च + अस्य, the remaining words are separate. Write the break-up of words yourself.

**अन्वयः** - 1. क्रियापदम् - निवर्तयामास । अप्रधानक्रियापदम् - दत्त्वा

2. Let us now write the words in different cases connected to the क्रियापदम् ।

| क्रि.प. | प्रधानम् निवर्तयामास | अप्रधानम् (क्त्वान्तम्) दत्त्वा |
|---|---|---|
| प्र - | भरताग्रजः | (भरताग्रजः) |
| द्वि - | भरतम् | पादुके, न्यासम् |
| च - | ------ | राज्याय |
| पं - | ------ | ततः |
| ष - | ------ | अस्य |
| अव्ययम् - | पुनः पुनः | ------ |

3. Now the अन्वय will be -

ततः भरताग्रजः अस्य राज्याय पादुके न्यासं दत्त्वा भरतं पुनः पुनः निवर्तयामास ।

**प्रतिपदार्थः** - ततः - Then, भरताग्रजः - (Rāma) the elder brother of Bharata, दत्त्वा - having given, पादुके - (a pair of) sandals, न्यासम् - as representatives, अस्य राज्याय - for him to rule the kingdom, पुनः पुनः - again and again (repeatedly), भरतम् निवर्तयामास - asked Bharata to go back(persuaded Bharata to return to the kingdom).

**तात्पर्यम् -** Bharata would not like to have the kingdom to rule and Rāma would not agree to go back. In such a situation how to find a ruler for the kingdom ? Both of them were steadfast in their decision. Finally Rāma found a solution. He gave his sandals to Bharata and asked him to take them as his representatives. Bharata was certainly relieved that even if he could not persuade Rāma to go back, he had atleast got the पादुका that had done the noble service of carrying Rāma around. However, even after obtaining this he was not willing to go back. Rāma had to force him to get back.

## ९. अनुवादपद्धतिः

'Clever boy - बुद्धिमान् बालः - Here the word 'clever' is an adjective(विशेषणम्) to the word 'boy' which is a substantive(विशेष्यम्). The object of description is a substantive. The special quality in the substantive is brought out by the adjective.

The adjective follows the substantive in case, number and gender. It does not have a fixed gender, number and case.

For example, take the word "clever", which is to be translated. Which gender, number or case do you associate it with ? This is known from the substantive that follows it.

Eg - A clever boy - चतुरः बालः ।
A clever girl - चतुरा बालिका ।
by the clever boy - चतुरेण बालेन ।
clever girl (obj) - चतुरां बालिकाम् ।
to the clever boy - चतुराय बालाय ।
of the clever girl - चतुरायाः बालिकायाः ।

In the above examples observe how there is a change in the gender, number and case of the adjective 'clever' due to the change in the substantive.

'That school', 'this city' - In examples like these, what do the words 'this', 'that' and others stand for ? Here also these words do

not have their own case ending, number and gender. Their forms have to be fixed only after knowing their substantive.

Eg - in that house - तस्मिन् गृहे
to these boys - एतेभ्यः बालकेभ्यः
that boy (obj) - तं बालकम्
in this sentence - एतस्मिन् वाक्ये
to that school - तस्मै विद्यालयाय
of these lessons - एतेषां पाठानाम्
of that village - तस्य ग्रामस्य
this book (obj) - एतत् पुस्तकम्
by these people - एतैः जनैः
these pens - एताः लेखन्यः

So while translating into Samskrit pay attention to the substantive and then fix the gender, number and case of the adjective.

**I.** Translate into English.

१. उत्तमानि एतानि चित्राणि भवान् कुत्र क्रीतवान् ?
२. उन्नतात् वृक्षात् पर्णम् अपतत् । (पर्णम् - leaf)
३. विशालायां नद्यां मीनाः सन्ति ।
४. एतत् पुस्तकं भवान् पठितवान् वा ?
५. तस्य अक्षराणि सुन्दराणि ।
६. एतस्यां लतायां सुन्दराणि पुष्पाणि सन्ति ।

**II.** Translate into Samskrit.

१. Let all people do work. (all - सर्वे)
२. He writes with a beautiful pen.
३. There are 100 students in this school.
४. How many flowers are there in that garland ?
५. In whom are there no faults?
६. There are diverse people in this world. (many, different, diverse - बहुविधाः)

**III.** Translate the following sentences into Samskrit. Use only past participles. Eg : - गतवान्, उक्तवान्

१. Rāma went to the forest.

२. He spoke the truth.

३. I ate the best fruit.

४. Did you go to the cinema ?

५. Many people had come to the programme.

६. Sītā wrote a story.

## १०. सन्धिः

So far you have studied 6 types of स्वरसन्धिs. Apart from these there are a few more points under this chapter, two of which are given below.

### I. प्रकृतिभावः

Study the following Examples.

१. **वसन्तऋतौ** सर्वत्र पुष्पविकासः दृश्यते ।

२. **धनऋद्धिः** केन न इष्यते ?

३. जनकः **राजऋषिः** इति प्रसिद्धः ।

४. **गुरुऋणात्** मुक्तिः कथमिति न ज्ञायते ।

५. **पितृऋणात्** मुक्तिः श्राद्धाद्याचरणात् भवति ।

In the above words in bold type a vowel is followed by another vowel. But no change due to Sandhi is seen.

१. वसन्त + ऋतुः
२. धन + ऋद्धिः
३. राजा + ऋषिः
] Here गुणसन्धि should have taken place.

४. गुरु + ऋणात् Here there should have been यण्सन्धि.

५. पितृ + ऋणम् Here सवर्णदीर्घसन्धि should have occured.

When अ, आ, इ, ई, उ, ऊ, ऋ and ॠ that are the final letters of a word (पदान्त), are followed by ऋकारः, there is प्रकृतिभावः । प्रकृतिभाव means that a sandhi does not take place even when all its

conditions are fulfilled. प्रकृतिभाव is optional. Therefore in the absence of प्रकृतिभाव the other sandhi takes place.

वसन्त + ऋतुः In this example if there is प्रकृतिभाव the form will be वसन्तऋतुः. Since प्रकृतिभाव is optional, in its absence गुणसन्धि occurs. Then the combined form will be वसन्तर्तुः When प्रकृतिभावः takes place if the first word ends in a long vowel, it will be changed to a short vowel.

उदा - राजा + ऋषिः*

राजऋषिः - प्रकृतिभावः (There is प्रकृतिभाव and the long vowel is shortened.)

राजर्षिः - गुणसन्धिः (In the absence of प्रकृतिभाव, गुणसन्धि has occured)

## अभ्यासः

**I.** Join the following words according to प्रकृतिभावसन्धि ।

| | | |
|---|---|---|
| १. ग्राम + ऋषभः | २. महा + ऋषिः | ३. वर्षा + ऋतुः |
| ४. वधू + ऋणम् | ५. स्त्री + ऋणम् | ६. वित्तकोष + ऋणम् |
| ७. राजा + ऋषभः | ८. पवित्रा + ऋक् | ९. परम + ऋषिः |

**II. यकारवकारलोपः**

Observe the examples given below.

१. माता गृहे **वर्तत** इति सः वदति ।

२. भवद्गृहं **शोभत इति** मित्रैः उक्तम् ।

३. **तस्मा इमां** लेखनीं देहि ।

४. संस्कृतपठनार्थं **बालका आगतौ** स्तः ।

५. बालाः चतुराः **वर्तन्त एव** इति अध्यापकेन चिन्तितम् ।

In the above examples observe the bold words. ए, ऐ, ओ, औ followed by a vowel should have यान्तवान्तादेशसन्धि । But the यकार and वकार are not seen. Actually यान्तवान्तादेश has taken place.

* This is not a compound word. राजा and ऋषिः are words ending in nominative case.

Then the य and व of the यान्तवान्तादेश are obliterated. The explanation for the same is as follows.

* वर्तते + इति (ए + इ = अय् + इ = यकारलोपः - अ + इ)
* शोभते + इति ( ए + इ = अय् + इ = यकारलोपः - अ + इ)
* तस्मै + इदम् (ऐ + इ = आय् + इ = यकारलोपः - आ + इ)
* बालकौ + आगतौ (औ + आ - आव् + आ = वकारलोपः - आ + आ)
* वर्तन्ते + एव (ए + ए = अय् + ए = यकारलोपः - अ + ए)

In this way the यकार and वकार of अय्, आय्, अव्, आव् found at the end of a word (पदान्त) get obliterated optionally. After the removal of यकार/वकार the remaining vowels should not be combined once again in any other Sandhi.

Such यकारलोप and वकारलोप is commonly found in verses.

## अभ्यासः

II. In the following combinations remove the यकार and वकार after effecting the यान्तवान्तादेशसन्धि ।

उदा - रामे + इति = रामय् + इति = राम इति

१. शोभते + एतत् २. रोचते + औषधम् ३. बालौ + आगतौ
४. पठ्यन्ते + एतैः ५. दृश्यन्ते + आलयाः ६. पच्यते + ओदनः
७. स्पृश्यते + आसन्दः ८. तौ + एकदा ९. गृहे + उपस्थितिः
१०. वर्ते + अहम्

---

**उत्तराणि**

I. १. ग्रामऋषभः २. महऋषिः ३. वर्षऋतुः ४. वधुऋणम् ५. स्त्रिऋणम् ६. वित्तकोषऋणम् ७. राजऋषभः ८. पवित्रऋक् ९. परमऋषिः

II. १. शोभतय् + एतत् / शोभत एतत् २. रोचतय् + औषधम् / रोचत औषधम् ३. बालाव् + आगतौ / बाला आगतौ ४. पठ्यन्तय् + एतैः / पठ्यन्त एतैः ५. दृश्यन्तय् + आलयाः / दृश्यन्त आलयाः ६. पच्यतय् + ओदनः / पच्यत ओदनः ७. स्पृश्यतय् + आसन्दः / स्पृश्यत आसन्दः ८. ताव् + एकदा / ता एकदा ९. गृहय् + उपस्थितिः / गृह उपस्थितिः १०. वर्तय् + अहम् / वर्त अहम्

## ११. सङ्ग्राह्यविषयाः

**Famous nines**

नव ग्रहाः – सूर्यः, चन्द्रः, मङ्गलः, बुधः, गुरुः, शुक्रः, शनिः, राहुः, केतुः ।

नव निधयः – महापद्मः, पद्मः, शङ्खः, मकरः, कच्छपः, मुकुन्दः, कुन्दः, नीलः, खर्वः ।

नव रत्नानि (कविषु) – धन्वन्तरिः, क्षपणकः, अमरसिंहः, शङ्कुः, वेतालभट्टः, घटकर्परः, कालिदासः, वराहमिहिरः, वररुचिः ।

**Tradition**

While taking a holy bath

**त्वं राजा सर्वतीर्थानां त्वमेव जगतः पिता ।**
**याचितं देहि मे तीर्थ सर्वपापापनुत्तये ।।**

You are the king of holy (waters); You are the father of the world; Grant me the desired object, O' holy water ! for the removal of all (my) sins.

**Answer to the riddle**

१. किन्नरः – a demi-God
२. कङ्कम् – Vulture
३. कामितार्थप्रदा – the giver of desired objects
४. किंशुकवत् – full of kimśuka trees

# परिचयः - अष्टमः पाठः

## प्रश्नाः

I. State whether correct or incorrect.

१. सिकताभ्यः तैलं प्राप्तुं न शक्यते । ( )

२. जरा व्याघ्री इव परितर्जयति । ( )

३. रोगाः सुहृदः इव भवन्ति । ( )

४. शशस्य विषाणः भवति । ( )

५. भरतः राज्यम् ऐच्छत् । ( )

II. Translate into Samskrit.

1. Let the picture be seen by you (plu).
2. Let service be done by people.
3. Let the stories be read by you.
4. Let the house be protected by dogs.
5. Let truth be spoken by all.

III. Answer the following.

1. What is प्रकृतिभाव ?
2. In राजऋषिः what is the speciality in the former word ?

---

**उत्तराणि**

I. 1. Correct 2. Correct 3. Incorrect 4. Incorrect 5. Incorrect

II. १. भवद्भिः चित्रं दृश्यताम् । २. जनैः सेवा क्रियताम् । ३. त्वया कथाः पठ्यन्ताम् । ४. शुनकैः गृहं रक्ष्यताम् । ५. सर्वैः सत्यम् उच्यताम् ।

III. 1. It is called प्रकृतिभाव when a Sandhi does not occur while all its conditions are fulfilled. 2. In राजऋषिः the long vowel आ of the first word is shortened.

# परिचयः - नवमः पाठः

इन्द्रोऽपि लघुतां याति स्वयं प्रख्यापितैर्गुणैः ।

Bragging about his own merits even Indra loses his self-esteem.

## १. भाषाभ्यासः

### तव्यत्-अनीयर्-प्रत्ययः

I.(अ) Read the following sentences carefully.

१. मया पाठः **पठनीयः**। = The lesson should be read by me.

२. त्वया सेवा **करणीया** । = Service should be done by you.

३. तैः देवः **पूजनीयः** । = God should be worshipped by them.

४. महिलया सस्यं **पालनीयम्** । = The plant should be taken care of by the lady.

५. सम्पादकेन लेखकः **मेलनीयः** । = The writer should be met by the editor.

६. विक्रयिकेण ग्राहिका **सन्तोषयितव्या** । = The lady customer should be pleased by the seller.

७. तया गोष्ठी **गन्तव्या** । = The meeting should be attended by her.

८. छात्रेण फलं **क्रेतव्यम्** । = The fruit should be bought by the student.

९. मित्रेण पिता **द्रष्टव्यः** । = Father should be seen by the friend.

१०. देवेन जनाः **रक्षितव्याः** । = People should be protected by God.

In the above sentences the verb forms पठनीयः = should be read, करणीयः = should be done etc., convey what must be done. The sentences are in passive voice and the verbal forms convey an order/command. Here two types of inflexions (प्रत्ययाः) are used -

१. तव्यत् (तव्य)

२. अनीयर् (अनीय)

Both these suffixes convey the same meaning (विध्यर्थः).

E'g - पठनीयः = पठितव्यः = must be read.

To convey विध्यर्थः either पठनीय(अनीयर्) or पठितव्य(तव्यत्) can be used.

विधिलिङ्लकार also can be used for conveying an order or command. Here, instead of the verbs of विधिलिङ्, तव्यदन्त and अनीयरन्त have been used. Since the forms ending in तव्य and अनीय are passive you must follow the rules of कर्मणिप्रयोग in the construction of sentences ie., कर्तृपदम् - तृतीया विभक्तिः, कर्मपदम् - प्रथमा विभक्तिः, क्रियापदं कर्मपदानुगुणम् ।

Words ending in तव्यत् and अनीयर् will change according to the gender and number of the object (कर्मपदम्).

उदा - पुस्तकं पठनीयम् / पठितव्यम् - (नपुं)
ग्रन्थः पठनीयः / पठितव्यः - (पुं)
गीता पठनीया / पठितव्या - (स्त्री)

Remember that the number (वचनम्) of तव्यदन्त/अनीयरन्त words will be एक, द्वि or बहु according to the वचनम् of the कर्मपदम् । (This rule was followed while constructing Passive sentences in Present tense, Past tense and Imperative mood also.)

## अभ्यासः

I. Write the तव्यत् प्रत्ययान्त forms of the following verbs as shown in the example.

उदा - गम् - गन्तव्यम्

१. ज्ञा - .............. २. नृत् - .............
३. पठ् - .............. ४. भू(भव्) - ..............
५. चिन्त् - .............. ६. धाव् - ..............
७. दृश् - ............ ८. क्रीड् - ..............
९. अट् - .............. १०. दा - ..............

II. Write the अनीयर् प्रत्ययान्त forms of the following verbs.

उदा - ताड् - ताडनीयम्

१. स्मृ ------ २. लिख् ------
३. रच् ------ ४. हस् ------
५. वद् ------ ६. वस् ------
७. पच् ------ ८. निन्द् ------
९. त्यज् ------ १०. चल् ------

III. Match the words in the two columns.

१. वृक्षः क्षालनीयानि
२. फलम् गन्तव्यः
३. पुस्तकानि करणीयः
४. विद्यालयः आघ्रातव्यः
५. वस्त्राणि आरोढव्यः
६. असत्यम् गातव्यम्
७. परोपकारः पठनीयानि
८. गीतम् पातव्यम्
९. गन्धः न वक्तव्यम्
१०. जलम् खादनीयम्

IV. Given below are कर्तृपदम्, कर्मपदम् and a धातुः for each sentence. Using them make sentences in कर्मणि प्रयोगः with either तव्यत् or अनीयर् प्रत्ययान्त forms.

उदा - भक्तः - देवः - (नमस्कृ) - भक्तेन देवः नमस्करणीयः ।

१. गीतकारः - गीतं - (रच्) ------ ------ ------ ।

२. अम्बा - शाकम् - (कर्त) ------ ------ ------ ।

३. कुम्भकारः - कुम्भः - (कृ) ----- ----- ------ ।

४. अग्रजः - फलम् - (दा) ------ ----- ------ ।

५. कर्मकरी - प्रकोष्ठः - (मार्ज) ----- ----- ----- ।

६. ग्राहिका - दन्तफेनः - (क्री) ----- ----- ------ ।

७. सज्जनाः - दुष्टाः - (परि+हृ) ------ ----- ------ ।

८. निर्धनाः - कष्टानि - (अनु+भुज्) ---- ---- ------ ।

९. पण्डिताः - काव्यम् - (लिख्) ---- ------ ------ ।

१०. भटाः - महाराजः - (श्लाघ) ----- ------ ------ ।

(आ) Observe the following sentences.

| कर्मणि | कर्तरि |
|---|---|
| 1. तेन शाला गन्तव्या । School should be attended by him. | सः शालां गच्छेत् । He should go to school. |
| 2. भवता कथा वक्तव्या । A story should be told by you. | भवान् कथां वदेत् । You should tell a story. |
| 3. भवत्या नाटकं द्रष्टव्यम् । The play should be seen by you. | भवती नाटकं पश्येत् । You should see the play. |
| 4. मुकुन्देन जलं पातव्यम् । Water should be drunk by Mukunda. | मुकुन्दः जलं पिबेत् । Mukunda should drink water. |
| 5. सख्या अनुजा सूचनीया । The younger sister should be informed by the friend. | सखी अनुजां सूचयेत् । The friend should inform the younger sister. |

6. भक्तेन मौनम् आचरणीयम् । Silence should be observed by the devotee. — भक्तः मौनम् आचरेत् । The devotee should observe silence.
7. आरक्षकेण चोरः ताडनीयः । The thief should be beaten by the police. — आरक्षकः चोरं ताडयेत् । The police should beat the thief.
8. गोविन्देन उत्पीठिका मार्जनीया । The table should be wiped by Govinda. — गोविन्दः उत्पीठिकां मार्जयेत् । Govinda should wipe the table.
9. नारदेन ज्ञानं दातव्यम् । Knowledge should be given by Nārada. — नारदः ज्ञानं दद्यात् । Nārada should give knowledge.
10. मनुष्येण विवेकः प्राप्तव्यः । Power of discrimination should be obtained by man. — मनुष्यः विवेकं प्राप्नुयात् । Man should obtain the power of discrimination.

| In कर्मणि sentences | In कर्तरि sentences |
|---|---|
| कर्तृ-कर्म-क्रियापद are as follows | कर्तृ-कर्म-क्रियापद are as follows |
| तृतीया-प्रथमा-कर्मपदानुगुणम् | प्रथमा-द्वितीया-कर्तृपदानुगुणम् |

Briefly stated it is -

| तृ + प्र + कर्मक्रिया | प्र + द्वि + कर्तृक्रिया |
|---|---|

The rules pertaining to the use of तव्यत् and अनीयर् प्रत्यय have been taught earlier in this lesson. A sentence with अनीयरन्त or तव्यान्त form is always in कर्मणिप्रयोगः । When we change it into कर्तरिप्रयोगः we have to use the विधिलिङ्लकार forms of the same verb-root as तव्यत् and अनीयर् are in the sense of विधि - 'must do'. This point will be clear if you study the sentences given above.

In short -

विध्यर्थः
- कर्तरि - विधिलिङ् लकार forms (पठेत्, लिखेत् etc.) should be used.
- कर्मणि - तव्यत् or अनीयर् प्रत्ययान्त should be used.

## अभ्यासः

**V.** Change the following sentences into active voice using लिङ्लकार forms.

उदा - तेन पाठः पठनीयः - सः पाठं पठेत् ।

१. भक्तेन देवः पूजनीयः । ......... ......... .........

२. उत्तमेन शत्रुः क्षन्तव्यः । ......... ......... .........

३. अध्यापकेन पाठः पाठनीयः । ......... ......... .........

४. मया चर्चा करणीया । ......... ......... .........

५. अस्माभिः भागः वोढव्यः ।......... ......... .........

६. भिक्षुकेण भिक्षा याचनीया । ......... ......... .........

७. किशोरेण विद्यालयः प्रवेष्टव्यः । ......... ......... .........

८. छात्रेण श्लोकः वक्तव्यः । ......... ......... .........

९. नायकेन विदेशः द्रष्टव्यः । ......... ......... .........

१०. महेशेन प्रश्नः प्रष्टव्यः । ......... ......... .........

**VI.** Using the given कर्तृ, कर्म and धातु make sentences in कर्तरि/कर्मणि as indicated in brackets, with लिङ् लकारः/तव्यत् or अनीयर् प्रत्ययान्त forms.

उदा - मानवः - धर्मः - पाल् - (कर्तरि) मानवः धर्मं पालयेत् ।

दुष्टः - अधर्मः त्यज् (कर्मणि) दुष्टेन अधर्मः त्यक्तव्यः ।

१. कृषकः - सस्यं - पोष् (कर्तरि) ----- ----- -----

२. रजकः - वस्त्रं - क्षाल् (कर्तरि) ----- ----- -----

३. सेविका - उपाहारः - आ+नी (कर्मणि) ---- ---- ----

४. क्षौरिकः - क्षुरपत्रं - नी (कर्मणि) ----- ----- -----

५. शिक्षकः - सुधाखण्डः - क्षिप् (कर्मणि) ---- ---- ---

६. बालिका - चित्रं - रच् (कर्तरि) ------ ------ ------
७. मञ्जुनाथः - पाकः - कृ (कर्तरि) ------ ------ ------
८. प्रकाशः - पत्रालयः - गम् (कर्मणि) ----- ----- ------
९. नागराजः - संस्कृतम् - पठ् (कर्तरि) ----- ---- -----
१०. सुहासः - नक्षत्रम् - दृश् (कर्तरि) ------ ------ ------
११. शशिकला - पाठः - पठ् (कर्मणि) ----- ----- -----
१२. नलिनी - दण्डदीपः - ज्वाल् (कर्तरि) ----- ----- -----
१३. सौचिकः - वस्त्रं - कर्त (कर्मणि) ------ ------ ------
१४. महाराजः - आज्ञा - दा (कर्तरि) ------ ------ ------
१५. चालकः - वाहनं - चाल् (कर्तरि) ------ ------ -----
१६. गायिका - भक्तिगीतं - गाय् (कर्मणि) ----- ----- -----

**(Answers on PNo - 239)**

## २. व्यावहारिकशब्दावली

### वाहनानि

| | | | |
|---|---|---|---|
| वृषभशकटः | - Bullock-cart | अश्वशकटः | - Horse-drawn cart |
| द्विचक्रिका | - Bicycle | स्कूटर्यानम् | - Scooter |
| कार्यानम् | - Car | जीप्यानम् | - Jeep |
| त्रिचक्रिका | - Autorickshaw | वस्तुवाहकम् | - Lorry |
| लोकयानम् | - Bus | नगरयानम् | - City Bus |
| सुखयानम् | - Luxury Bus | सामिसुखयानम् | - Semi-luxury Bus |
| वेगदूतयानम् | - Express Bus | रेल्यानम् | - Train |
| विमानम् | - Aircraft | उडुपः | - Raft |
| नौका | - Boat | महानौका | - Ship/Vessel |
| मार्गः | - Road | पादपथः | - Foot path |
| उपमार्गः | - Cross Road | मुख्यमार्गः | - Main Road |
| राजमार्गः | - Royal Path | स्तरः | - Stage/Level |
| घट्टः | - Phase/Block | स्थानकम् | - Stop/Terminus |
| चतुष्पथः | - Circle | | |

## ३. चाटुश्लोकः

There are four easy ways of making money. Each of them is found in one individual. It is rare to find a combination of two or three of them in one individual.They are -

दैवज्ञत्वं मान्त्रिकत्वं भैषज्यं चाटुकौशलम् ।
एकैकमर्थलाभाय द्वित्रयोगस्तु दुर्लभः ।।

The astrologer's job, the magician's profession, any medical practice and skill in witty sayings - any one of them is enough to make money. It is rare to find the combination of two or three of them (in one person.)

## ४. समस्या

'शतचन्द्रं नभस्तलम्' – This is a Samasyā. It means that the sky has a hundred moons. The Samasyā is solved in the following stanza.

दामोदर-कराघात-विह्वलीकृतचेतसा ।
दृष्टं चाणूरमल्लेन शतचन्द्रं नभस्तलम् ।।

With his mind set whirling by a terrible blow of Kṛṣṇa's fist, Caṇūra the wrestler saw the sky as if pervaded by a hundred moons.

## ५. सुभाषितम्

त्यागो गुणो वित्तवतां वित्तं त्यागवतां गुणः ।
परस्परवियुक्तौ तु वित्तत्यागौ विडम्बना ।।१७।।

**पदविभागः** - त्यागः, गुणः, वित्तवताम्, वित्तम्, त्यागवताम्, गुणः, परस्परवियुक्तौ, तु, वित्तत्यागौ, विडम्बना ।

**प्रतिपदार्थः** – त्यागः – Sacrifice (giving money away) गुणः – is a virtue वित्तवताम् – of the rich; वित्तम् – having money गुणः – is a virtue त्यागवताम् – of the benevolent. तु – But, वित्तत्यागौ – money and benevolence परस्परवियुक्तौ – are not found together (in one

person). विडम्बना - It is ironical !

**तात्पर्यम्** - If the rich have a mind to give money away, it is indeed a merit. If generous people have enough money, this is also a merit. But wealth and generosity do not go together. This is ironical indeed !

न सा सभा यत्र न सन्ति वृद्धाः
वृद्धा न ते ये न वदन्ति धर्मम् ।
धर्मो न वै यत्र च नास्ति सत्यम्
सत्यं न तद्यच्छलनानुविद्धम् ॥१८॥

**पदविभागः** - न, सा, सभा, यत्र, न, सन्ति, वृद्धाः, वृद्धाः, न, ते, ये, न, वदन्ति, धर्मम्, धर्मः, न, वै, यत्र, च, न, अस्ति, सत्यम्, सत्यम्, न, तत्, यत्, छलनानुविद्धम् ।

**प्रतिपदार्थः** - यत्र - Where वृद्धाः - elders न सन्ति - are not there सा सभा न - it is not an assembly. ते - Those ये - who न वदन्ति - do not speak धर्मम् - Dharma न वृद्धाः - are not elders. च - And तत् - that यत्र - in which सत्यं नास्ति - there is no truth धर्मः न वै - is not Dharma. तत् - That यत् - which is छलनानुविद्धम् - charged with deceit न सत्यं - is not truth.

**तात्पर्यम्** - There is no assembly where there are no elders. They are no elders if Dharma is not taught by them. It is not Dharma if it does not contain truth. It is not truth if it is tainted with deceit.

## ६. पदसङ्ग्रहः

**एध्** - to grow

१. एधते २. एध्यते ३. एधिष्यते
४. एधितव्यम् - एधनीयम् ५. एधितः - एधिता - एधितम्
६. एधितवान् - एधितवती ७. एधमानः - एधमाना ८. एधित्वा - प्रैध्य
९. एधितुम् ।

**कूज्** - to coo

१. कूजति २. कूज्यते ३. कूजिष्यति

४. कूजितव्यम् - कूजनीयम् ५. कूजितः - कूजिता - कूजितम्

६. कूजितवान् - कूजितवती ७. कूजन् - कूजन्ती ८. कूजित्वा उत्कूज्य ९. कूजितुम् ।

**कॄ** - to scatter

१. किरति २. कीर्यते ३. करिष्यति

४. करितव्यम्, करीतव्यम् - करणीयम् ५. कीर्णः - कीर्णा - कीर्णम्

६. कीर्णवान् - कीर्णवती ७. किरन् - किरन्ती, किरती ८. कीर्त्वा - विकीर्य ९. करितुम् - करीतुम् ।

**क्रमु** - to step/pace/take a stride

१. क्राम्यति, क्रामति २. क्राम्यते ३. क्रमिष्यति

४. क्रमितव्यम् - क्रमणीयम् ५. क्रान्तः - क्रान्ता - क्रान्तम्

६. क्रान्तवान् - क्रान्तवती ७. क्रामन् - क्रामन्ती, क्राम्यन् - क्राम्यन्ती

८. क्रान्त्वा - क्रमित्वा - सङ्क्रम्य ९. क्रमितुम् ।

**क्षमु** - to tolerate

१. क्षमते २. क्षम्यते ३. क्षमिष्यते, क्षंस्यते

४. क्षन्तव्यम् - क्षमितव्यम् - क्षमणीयम् ५. क्षान्तः - क्षान्ता - क्षान्तम्

६. क्षान्तवान् - क्षान्तवती ७. क्षममाणः - क्षममाणा ८. क्षमित्वा - क्षान्त्वा - परिक्षम्य ९. क्षन्तुम् - क्षमितुम् ।

## ७. काव्यकथा

### कुशः कुमुद्वती च

नृपः कुशः कुशावतीनगरे वसति स्म । कदाचित् राजभवने कुशः रात्रौ शयने आसीत् । किन्तु प्रबुद्धः एव आसीत् । तदा अयोध्यायाः अधिदेवता तत्र आगच्छति । कुशम् उद्दिश्य वदति - 'पुरा अयोध्यायां मार्गे नूपुराणां ध्वनिः श्रूयते स्म । इदानीं शृगालानाम् अमङ्गलरवः श्रूयते । गवाक्षाः कृमितन्तुजालैः आच्छादिताः । एवम् अयोध्यानगरी मरुभूमेः अवस्थां

प्राप्तवती । अतः पुनः आगत्य तत्रैव भवान् वसतु' इति । ततः कुशः शिल्पिभिः अयोध्यां नवीकृत्य तत्रैव वासम् अकरोत् ।

कुशः कदाचित् सरयूनद्यां जलक्रीडां कृत्वा तटम् आगतवान् । तस्य हस्ते 'जैत्राभरणं' नाम वलयम् आसीत् । किन्तु तत् जले एव प्रभ्रष्टम् आसीत् । तत् आभरणं जनकेन रामेण दत्तम् आसीत् । आभरणस्य अन्वेषणार्थं कुशः बहु प्रयत्नं कृतवान् । किन्तु आभरणं न लब्धम् । 'केनापि अपहृतम्' इति मत्वा गरुडास्त्रं विमोक्तुं कुशः सन्नद्धः अभवत् । तदा नागलोकस्य राजा कुमुदः कुमुद्वत्या सह आगच्छति । कुशं प्रति - 'राजन् ! इयं कुमुद्वती मम अनुजा । सा कन्दुकेन क्रीडन्ती आसीत् । तदा भवतः 'जैत्राभरणम्' आसादितवती । अतः इदं जैत्राभरणं कन्यारत्नं च स्वीकुरु' इति कथितवान् ।

अनन्तरं कुशः कुमुद्वतीं परिणीतवान् । कुशस्य कुमुद्वत्याः च अतिथिः नाम पुत्रः जातः । अतिथिः सकलकलासु पारङ्गतः । कदाचित् कुशः युद्धे देवानां साहाय्यं कर्तुं देवलोकं गतवान् । तत्र दुर्जयनामकेन राक्षसेन सह युद्धम् अकरोत् । यद्यपि युद्धे दुर्जयः मृतः, किन्तु तस्मिन्नेव युद्धे कुशः अपि मृतः । पत्नी कुमुद्वती चितारोहणं कृतवती । ततः सर्वे अमात्याः मिलित्वा पुत्रस्य अतिथेः पट्टाभिषेकं कृतवन्तः ।

## Kuśa and Kumudvati

King Kuśa used to live in a city called Kuśavatī. Once during the night he was lying awake in his bed. Then the presiding deity of Ayodhyā appeared to him. She said to Kuśa - " In the past the jingling of anklets was heard on the paths of Ayodhyā. Now only the inauspicious cry of jackals is heard. Windows are coverd in cobwebs. Thus Ayodhyā has been reduced to a desert. Hence, you come back and reside there only." Then Kuśa renovated Ayodhyā with the help of skilled architects and settled there.

Once Kuśa had water-sports in the Sarayū river and as he came to the bank his bracelet - called (Victory ornament) *Jaitrābharaṇa* slipped into the water. It had been given by his father Rāma. Kuśa tried his best to find the ornament. But the ornament could not be found. Thinking that somebody might have stolen it, Kuśa got ready to discharge the Garuḍa missile. Just at the moment Kumuda the king of the Serpents' world, appeared with Kumudvatī. He said to Kuśa - "O king ! this is Kumudvatī, my younger sister. She was playing with a ball. At that time she got your '*Jaitrābharaṇa*'. Therefore, take this '*Jaitrābharaṇa*' as well as this jewel of a maiden."

Then Kuśa married Kumudvatī. They had a son by name Atithi, who became well versed in all arts. Once Kuśa went to heaven to help the gods in a battle. There he fought against a demon called Durjaya. Although Durjaya died in the battle, in the same war Kuśa died too. His wife Kumudvatī entered the funeral pyre with him. Then all the ministers coronated their son Atithi as their king.

**एतेषाम् उत्तरं लिखत ।**

१. रात्रौ का आगच्छति ?

२. जैत्राभरणं केन दत्तम् आसीत् ?

३. कुशः कां परिणीतवान् ?

४. कुशः देवलोके केन सह युद्धम् अकरोत् ?

५. सर्वे मिलित्वा कस्य पट्टाभिषेकं कृतवन्तः ?

**(Answers on PNo - 239)**

## ८. अन्वयक्रमः

सः काममनवाप्यैव रामपादावुपस्पृशन् ।
नन्दिग्रामेऽकरोद्राज्यं रामागमनकांक्षया ।।

**पदविभागः** – सः, कामम्, अनवाप्य, एव, रामपादौ, उपस्पृशन्, नन्दिग्रामे अकरोत्, राज्यम्, रामागमनकांक्षया ।

**अन्वयः** - १. क्रियापदम् - मुख्यम् - अकरोत्
अङ्गभूतम् - अनवाप्य, उपस्पृशन्

२. Let us group the words according to their case-terminations.

प्रथमा - सः, उपस्पृशन्
द्वितीया - राज्यम्, कामम्, रामपादौ
तृतीया - रामागमनकांक्षया
सप्तमी - नन्दिग्रामे

३. In this sloka there are three words ending in द्वितीयाविभक्तिः । They are राज्यम्, कामम् and रामपादौ. Each of them has its अन्वय with a different क्रिया । कामम् is related to the verb अनवाप्य, रामपादौ to उपस्पृशन् and राज्यम् to अकरोत् ।

४. The complete prose order is -
सः कामम् अनवाप्य एव रामपादौ उपस्पृशन् रामागमनकांक्षया नन्दिग्रामे राज्यम् अकरोत् ।

**प्रतिपदार्थः** - सः - He (Bharata), कामम् अनवाप्य एव - without his desire being fulfilled (his desire that Rāma would come back to Ayodhya), उपस्पृशन् - (and) touching (prostrating before) रामपादौ - Rāma's feet रामागमनकांक्षया - and eagerly awaiting the return of Rāma, राज्यम् अकरोत् - ruled the kingdom, नन्दिग्रामे - staying in Nandigrāma.

**तात्पर्यम्** - Bharata had gone to the forest with the intention of somehow persuading Rāma to go back with him. But he did not succeed in his mission. However, he was able to obtain Rāma's sandals to represent him. He returned tearfully after repeatedly offering his salutations at the feet of Rāma. But he did not enter the Ayodhyā that was bereft of Rāma. He thought "when Rāma is living in a hermitage in the forest why should I have the comforts of the palace ? So, out side Ayodhyā he stayed in Nandigrāma,

anxiously awaiting Rāma's return.

> गते तु भरते श्रीमान् सत्यसन्धो जितेन्द्रियः ।
> रामस्तु पुनरालक्ष्य नागरस्य जनस्य च ॥
> तत्रागमनमेकाग्रो दण्डकान् प्रविवेश ह ॥

**पदविभागः** - रामः + तु, पुनः + आलक्ष्य, तत्र + आगमनम् + एकाग्रः
The remaining are single words. Write the पदविभाग yourself.

**अन्वयः** - १. गते तु भरते = This is a special usage known as सति सप्तमीप्रयोगः that has to be taken in the **अन्वय** as it is. Let us now arrange the remaining words in prose order.

२. The verb here is - प्रविवेश
प्रथमा - श्रीमान्, सत्यसन्धः, जितेन्द्रियः, एकाग्रः, रामः
द्वितीया - दण्डकान्, आगमनम्
षष्ठी - नागरस्य, जनस्य
अव्ययम् - तत्र, आलक्ष्य, च, पुनः, ह, तु

३. The words नागरस्य and जनस्य are related to आगमनम् which in its turn is related to the अप्रधानक्रियापदम् - आलक्ष्य ।

४. The complete prose order of the verse will now be
भरते गते तु श्रीमान् सत्यसन्धः जितेन्द्रियः एकाग्रः रामः नागरस्य जनस्य च तत्र पुनः आगमनम् आलक्ष्य दण्डकान् प्रविवेश ह ।

**प्रतिपदार्थः** - भरते गते तु - When Bharata had left, श्रीमान् रामः - the noble Rāma, सत्यसन्धः - who was truthful, जितेन्द्रियः - had conquered his senses, एकाग्रः - and was single-minded, प्रविवेश - entered, दण्डकान् - the Daṇḍaka forests, आलक्ष्य - suspecting, पुनः आगमनम् - the return , नागरस्य जनस्य - of the citizens, तत्र - there (in Chitrakūṭa).

**तात्पर्यम्** - Bharata returned after obtaining Rāma's sandals. But a

new problem arose for Rāma. Until now the subjects did not know where he was. Bharata's visit had made it known to all. Rāma feared that they would all start coming to him. He decided that it was better to move out of that place. Hence, he went into the Daṇḍakāraṇya.

## १. अनुवादपद्धतिः

1. I must read this book. = अहं ग्रन्थं पठनीयम् ।
2. He must go to the village. = सः ग्रामं गन्तव्यम् ।
3. We all must show sincerity. = वयं सर्वे श्रद्धां दर्शनीयम् ।
4. Boy must eat fruit. = बालकः फलं खादनीयम् ।
5. You must not commit mistake. = त्वं दोषं न करणीयम् ।

Read the five sentences above. All the five Samskrit sentences are grammatically incorrect. Let us see where the mistake is.

It is like this - I = अहम्, book = ग्रन्थम्, must read = पठनीयम्

Trying to translate every word singly is the mistake. The sentence as a whole must be taken into consideration while translating.

'I must read the book'. This sentence can be translated either in Active voice (कर्तरिप्रयोगः) or passive voice (कर्मणिप्रयोगः). If it is active voice the rule to be followed is - प्र + द्वि + कर्तृक्रिया । Then the sentence will be अहं ग्रन्थं पठेयम् । In passive voice the rule to be followed is - तृ + प्र + कर्मक्रिया । Then मया ग्रन्थः पठनीयः is the correct sentence.

In English the expression is usually in active voice as 'I must read the book'. But, when translating into Samskrit if we are unsure whether to put it in Active or Passive we end up commencing the sentence in Active and finishing in Passive. This is where the error is in the sentences illustrated above.

Therefore, while translating the expressions like 'must do', 'must read' etc., extreme care is necessary. If an अनीयरन्त or तव्यदन्त is used the sentence has to be in Passive only. The use of कर्मणिप्रयोग

is very common and easy in Samskrit. Therefore let us follow the कर्मणि rule तृतीया + प्रथमा + कर्मक्रिया and translate the sentence in Passive voice only. However, it is not wrong to state the same in कर्तरि also.

**I.** Translate the following sentences in Samskrit according to the rule of Passive voice.

उदा - Milk must be drunk. - क्षीरं पातव्यम् ।

1. Fruit must be eaten. .................. .................... ।
2. Animals must be protected. .................. .................... ।
3. Translation must be done. .................. .................... ।
4. Sentences must be written. .................. .................... ।
5. Songs must be sung. .................. .................... ।

(must be sung - गातव्यम्)

6. Cleanliness must be maintained. .............. .................... ।
7. Books must be sold.. .................. .................... ।

(must be sold - विक्रेतव्यम्)

8. Picture must be sketched. .................. .................... ।
9. Slokas must be read. .................. .................... ।
10. Letters must be sent. .................. .................... ।

**II.** Translate the following sentences into Samskrit in passive voice.

1. I must climb the tree. (must be climbed - आरोढव्यः)
2. The maid servant must wash the clothes.
3. All must follow the rule.
4. The teacher must teach the lesson.
5. The devotee must pray to God. **(Answers on PNo - 239)**

## १०. सन्धिः

You have studied the Euphonic combinations of vowels. You have also done sufficient exercises in joining and splitting words. Given below is a mixed exercise containing all स्वरसन्धि s। Do it and test yourself.

## अभ्यासः

**I.** Split the following words and Name the Sandhis.

| | | |
|---|---|---|
| १. अस्तीति | २. कृत्वापि | ३. दृष्ट्वेमम् |
| ४. सैव | ५. लिखन्त्यपि | ६. तास्वपि |
| ७. चापि | ८. नैतत् | ९. एकैकम् |
| १०. उत्तरोत्तरम् | ११. चन्द्रोदयः | १२. नैकत्र |
| १३. दीपस्योपरि | १४. तावत्र | १५. बालकेऽपि |
| १६. विदितावेतौ | १७. सर्वेऽपि | १८. दीपेष्वपि |
| १९. गिरावुदितः | २०. ज्ञायत एव | २१. सर्वस्मा अपि |

**II.** Join and name the Sandhi.

| | | |
|---|---|---|
| १. न + इति | २. न + एनम् | ३. न + उन्नतिः |
| ४. पश्यन्ति + अत्र | ५. पश्यन्ति + इह | ६. सति + अपि |
| ७. मार्गे + अन्यः | ८. मही + ईशः | ९. महा + ईशः |

---

**सन्धिः**

I. १. अस्ति + इति - सवर्णदीर्घसन्धिः २. कृत्वा + अपि - सवर्णदीर्घसन्धिः ३. दृष्ट्वा + इमम् - गुणसन्धिः ४. सा + एव - वृद्धिसन्धिः ५. लिखन्ति + अपि - यण्सन्धिः ६. तासु + अपि - यण्सन्धिः ७. च + अपि - सवर्णदीर्घसन्धिः ८. न + एतत् - वृद्धिसन्धिः ९. एक + एकम् - वृद्धिसन्धिः १०. उत्तर + उत्तरम् - गुणसन्धिः ११. चन्द्र + उदयः - गुणसन्धिः १२. न + एकत्र - वृद्धिसन्धिः १३. दीपस्य + उपरि - गुणसन्धिः १४. तौ + अत्र - यान्तवान्तादेशसन्धिः १५. बालके + अपि - पूर्वरूपसन्धिः १६. विदितौ + एतौ - यान्तवान्तादेशसन्धिः १७. सर्वे + अपि - पूर्वरूपसन्धिः १८. दीपेषु + अपि - यण्सन्धिः १९. गिरौ + उदितः - यान्तवान्तादेशसन्धिः २०. ज्ञायते + एव - ज्ञायतय् + एव - यान्तादेशः यलोपः च २१. सर्वस्मै + अपि - सर्वस्माय् + अपि - यान्तादेशः यलोपः च

II. १. नेति - गुणसन्धिः २. नैनम् - वृद्धिसन्धिः ३. नोन्नतिः - गुणसन्धिः ४. पश्यन्त्यत्र - यण्सन्धिः ५. पश्यन्तीह - सवर्णदीर्घसन्धिः ६. सत्यपि - यण्सन्धिः ७. मार्गेऽन्यः - पूर्वरूपसन्धिः ८. महीशः - सवर्णदीर्घसन्धिः ९. महेशः - गुणसन्धिः १०. गृहयीशः - यान्तवान्तादेशसन्धिः ११. गृहेऽम्बा - पूर्वरूपसन्धिः १२. परमार्थः - सवर्णदीर्घसन्धिः १३. मिथ्यारोपः - सवर्णदीर्घसन्धिः १४. सुधास्ति - सवर्णदीर्घसन्धिः १५. सुधैषा - वृद्धिसन्धिः १६. एतेऽपि - पूर्वरूपसन्धिः १७. एतयिह - यान्तवान्तादेशसन्धिः १८. एषैति - वृद्धिसन्धिः १९. दशमेऽहनि - पूर्वरूपसन्धिः २०. मन्दिरेऽस्मिन् - पूर्वरूपसन्धिः २१. तेनेदम् - गुणसन्धिः

| | | |
|---|---|---|
| १०. गृहे + ईशः | ११. गृहे + अम्बा | १२. परम + अर्थः |
| १३. मिथ्या + आरोपः | १४. सुधा + अस्ति | १५. सुधा + एषा |
| १६. एते + अपि | १७. एते + इह | १८. एषा + एति |
| १९. दशमे + अहनि | २०. मन्दिरे + अस्मिन् | २१. तेन + इदम् |

## ११. सङ्ग्राह्यविषयाः

**Famous tens**

दश दिशः - पूर्व, पश्चिम, उत्तर, दक्षिण, आग्नेय, नैर्ऋत्य, वायव्य, ईशान्य, ऊर्ध्व, अधस् ।

दशोपनिषदः - ईश, केन, कठ, प्रश्न, मुण्डक, माण्डूक्य, तैत्तिरीय, बृहदारण्यक, छान्दोग्य, ऐतरेय ।

दश दानानि - गो, भू, तिल, हिरण्य, आज्य, वासस्, धान्य, गुड, रूप्य, लवण ।

**Tradition**

While feeding a cow

सुरभिर्वैष्णवीमातः सुरलोके महीयसे ।
ग्रासमुष्टिर्मया दत्ता सुरभे प्रतिगृह्यताम् ।।

Oh Mother ! Surabhi ! (Kamadhenu - the divine cow that yields all our wishes) you are worshipped in heaven also for you are related to Viṣṇu. Here I give a handful of grass, accept it.

# परिचयः - नवमः पाठः
## प्रश्नाः

**I.** Fill in the blanks with the appropriate forms of the कर्तृपदानि given in brackets to suit the verbs.

१. (बालः) --------- पाठः पठनीयः ।
२. (जनाः) --------- धर्मः पालनीयः ।
३. (भक्ताः) --------- देवं नमेयुः ।
४. (बालिकाः) --------- श्लोकः वक्तव्यः ।
५. (त्वं) --------- दोषः न करणीयः ।

**II.** Fill in the blanks with the suitable विध्यर्थ forms of the roots given in brackets.

१. आपणिकेन वस्तूनि (दा) ---------- ।
२. सः देवं (नम्) ---------- ।
३. बालकाः असत्यं न (वद्) ---------- ।
४. कर्मकरेण नगरं (गम्) ---------- ।
५. दुष्टाः सज्जनान् न (पीड्) ---------- ।
६. दुष्टैः सज्जनाः न (पीड्) ---------- ।

**III.** Answer in Samskrit.

१. त्यागः केषां गुणः ?
२. का सभा न ?
३. कः धर्मः न ?
४. 'तव्यत्'प्रत्ययः कस्मिन् अर्थे भवति ?

---

**उत्तराणि**

I. १. बालेन २. जनैः ३. भक्ताः ४. बालिकाभिः ५. त्वया
II. १. दातव्यानि २. नमेत् ३. वदेयुः ४. गन्तव्यम् ५. पीडयेयुः ६. पीडनीयाः
III. १. त्यागः वित्तवतां गुणः । २. यत्र वृद्धाः न सन्ति सा सभा न । ३. यत्र सत्यं नास्ति सः धर्मः न । ४. तव्यत्प्रत्ययः विध्यर्थे भवति ।

# परिचयः - दशमः पाठः

।। तस्य तदेव मधुरं यस्य मनो यत्र संलग्नम् ।।
It is sweet when the mind is struck.

## १. भाषाभ्यासः
### भावेप्रयोगः

**I. (अ)** Study the following sentences.

१. वृक्षेण **कम्प्यते** । = The tree is shaking.
२. तेन **उपविश्यते** । = He is sitting. (Sitting is done by him.)
३. तया **हस्यते** । = She is laughing. (Laughing is done by her.)
४. वृद्धैः **पत्यते** । = Old men fall down. (Falling is done by the old men.)
५. वैद्येन **शङ्क्यते** । = It is suspected by the doctor.*
६. अतिथिभिः **उष्यते** । = Guests stay.
७. शिक्षकैः **यत्यते** । = It is attempted by the teachers.*
८. गृहिणीभिः **मिल्यते** । = Housewives meet.
९. अम्बिकया **वृध्यते** । = Ambika is growing up.
१०. सुन्दर्या **नृत्यते** । = The pretty girl is dancing.
११. बालिकया **उत्थीयते** । = The girl stands up.
१२. पुष्पेण **विकस्यते** । = The flower blooms.
१३. तेन **चल्यते** । = He walks.

१४. यानेन **स्थीयते** । = The vehicle is stationary.

१५. बालकेन **शय्यते** । = The boy is lying down (sleeping).

The above Samskrit sentences are in भावे प्रयोगः or Impersonal voice and present tense. There are three types of expressions possible in Samskrit. They are कर्तरि प्रयोगः - Active voice, कर्मणि प्रयोगः - Passive voice and भावे प्रयोगः - Impersonal voice. You have learnt at Pravesha level that verbs are of two types as - सकर्मक - Transitive and अकर्मक - Intransitive.

In Samskrit language a sentence that has a transitive verb can be expressed either in Active voice(कर्तरि) or Passive voice (कर्मणि). Similarly, a sentence that has an intransitive verb can be expressed in either कर्तरि or भावे (Impersonal voice). In other words, when we change the voice of a sentence having an intransitive verb (अकर्मकक्रिया) from Active, we get भावेप्रयोगः or Impersonal voice.

However, in other Indian languages the use of भावेप्रयोगः is not as common as in Samskrit. In English we rarely come across Impersonal voice. Therefore, the above Samskrit sentences that are in भावेप्रयोग are translated into English in Active voice only. In one or two instances the literal translation is shown in brackets. The fifth and seventh sentences marked with a star* are translated in Impersonal voice only. On these lines try to understand the remaining sentences also.

Rules of Impersonal voice -

1. Subject will be in the Instrumental case तृतीया विभक्तिः ।

   उदा - **बालकेन** धाव्यते ।

2. The verb will change as in the Passive voice.

   उदा - पत्यते, कम्प्यते, उपविश्यते etc.

3. The verb is always in प्रथम पुरुष, एकवचन only.

4. Since the verbs are Intransitive, there is no object in भावेप्रयोगः ।

## अभ्यासः

**I.** Write the Impersonal form (भावे रूपम्) of the following verbs.

उदा - पतति - पत्यते

१. धावति - ............ २. हसति - ............

३. तिष्ठति - ............ ४. गर्जति - ............

५. कम्पते - ............ ६. यतते - ............

७. भवति - ............ ८. नृत्यति - ............

९. नश्यति - ............ १०. उपविशति - ............

**II.** Change the following sentences into Impersonal voice.

उदा - पुष्पं विकसति - पुष्पेण विकस्यते ।

१. पर्णं पतति ------ २. विचारः स्फुरति ------

३. सीता कम्पते ------ ४. बालः यतते ------

५. सिंहाः गर्जन्ति ------ ६. बालिकाः तिष्ठन्ति ------

७. फलं नश्यति ------ ८. विदूषकाः हसन्ति ------

९. नर्तक्यः नृत्यन्ति ------ १०. बालाः पतन्ति ------

**III.** Change the following sentences which are in भावेप्रयोगः into कर्तरिप्रयोगः ।

उदा - पर्णैः पत्यते । पर्णानि पतन्ति ।

१. बालकाभ्याम् उपविश्यते । ............ ............ ।

२. गृहिणीभिः हस्यते । ............ ............ ।

३. तैः पत्यते । ............ ............ ।

४. अस्माभिः क्रीड्यते । ............ ............ ।

५. शिशुभिः रुद्यते । ............ ............ ।

६. युवाभ्यां भूयते । ............ ............ ।

७. लताभ्यां वर्ध्यते । ……………. ……………. ।

८. छात्रैः उत्थीयते । ……………. ……………. ।

९. वृक्षैः कम्प्यते । ……………. ……………. ।

१०. बालिकाभिः मिल्यते । ……………. ……………. ।

**(आ)** Read the following sentences carefully.

१. अस्माभिः अक्रीड्यत ।

२. नर्तकीभिः अनृत्यत ।

३. तया यत्यताम् ।

४. सस्यैः जीव्यताम् ।

५. वाहनेन चलितव्यम् ।

६. व्यजनैः भ्रमितव्यम् ।

७. नयनेन स्फुरितम् ।

८. अतिथिभिः उपविश्यताम् ।

९. फलेन अपत्यत ।

१०. मित्रेण भवितव्यम् ।

११. पुष्पैः पतितम् ।

१२. क्रीडालुभिः धावितम् ।

१३. अस्माभिः उपवेष्टव्यम् ।

१४. पुष्पेण विकस्यताम् ।

१५. तेन अमिल्यत ।

All the above sentences are in Impersonal voice. They are in भूतकालः(लङ्), आज्ञार्थः (लोट्) and विध्यर्थः । The same rules as in Present tense are followed here also. ie,. The verb changes in भावे प्रयोग as in कर्मणि । But, it is always in प्रथम पुरुष, एकवचन only. Hence, the other पुरुष and वचन forms of the verb are not there in भावे प्रयोग ।

## अभ्यासः

I. Change the following sentences into Impersonal voice.

(अ) भूतकाले

उदा - बालः अपतत् । बालेन अपत्यत ।

१. सिंहः अगर्जत् । ......... .........
२. मयूरः अनृत्यत् । ......... .........
३. सः अलज्जत । ......... .........
४. कार्यक्रमः अवर्तत । ......... .........
५. बालाः अक्रीडन् ।......... .........
६. फलानि अपतन् । ......... .........
७. जनाः अमोदन्त । ......... .........
८. वृक्षाः अशोभन्त । ......... .........
९. अहम् अहसम् । ......... .........
१०. त्वम् अमिलः । ......... .........

(आ) आज्ञार्थे (लोट्लकारे)

उदा - बालः उपविशतु । बालेन उपविश्यताम् ।

१. सः हसतु । ......... .........
२. लता वर्धताम् । ......... .........
३. छात्राः क्रीडन्तु । ......... .........
४. अहम् उपविशानि । ......... .........
५. त्वं मिल । ......... .........

(इ) विध्यर्थे

उदा - भवान् धावेत् । भवता धावनीयम् ।

१. सा नृत्येत् । ......... .........
२. ते चलेयुः । ......... .........
३. जनाः धावेयुः । ......... .........

४. वयम् उपविशेम । ......... .........

५. फलानि पतेयुः । ......... .........

**(Answers on PNo - 240)**

## २. व्यावहारिकशब्दावली

| | | | |
|---|---|---|---|
| समपत्रम् | - Post-card | सविधे | - addressed to |
| पिहितपत्रम् | - Envelope | वामतः | - to the left |
| अन्तर्देशीयपत्रम् | - Inland letter | दक्षिणतः | - to the right |
| पत्रालयः | - Post-office | पुरतः | - forward/in front of |
| पत्रवितारकः | - Post-man | पृष्ठतः | - behind |
| दूरवाणी | - Telephone | गृहसङ्ख्या | - Door number |
| जङ्गमदूरवाणी | - Mobile phone | गृहनाम | - Name of the house |
| दूरदर्शनम् | - Television | स्तरः | - Level |
| आकाशवाणी | - Radio | अट्टः | - Storey |
| सङ्गणकम् | - Computer | घट्टः | - Phase |
| तन्त्रांशः | - Soft ware | ग्रामः | - Village |
| यन्त्रांशः | - Hard ware | नगरम् | - City/Town |
| ध्वनिमुद्रकम् | - Tape recorder | उपमण्डलम् | - Talluk |
| ध्वनिमुद्रिका | - Audio-tape | जनपदम् | - District |
| सान्द्रमुद्रिका | - C.D.Rom | राज्यम् | - State |
| तन्त्रीवार्ता | - Telegraphic message | देशः | - Country |
| सङ्केतः | - Address | विदेशः | - Foreign land |

सकाशात् - From (while writing the address)

प्रतिवेशिराज्यम् - Neighbouring state

## ३. चाटुश्लोकः

Once two girls/ladies met after their marriage. They exchanged notes about their husbands. The following stanza contains their conversation.

चतुरः खलु मे भर्ता
लिखति च यच्च परो न वाचयति ।
सखि ! चतुरतरो मे भर्ता
स्वयमपि लिखितं स्वयं न वाचयति ।।

One of the ladies said - "My husband is very intelligent. No body can read what he writes." The other lady said - "My husband is even more intelligent. He cannot read what he has himself written !"

## ४. समस्या

पानीयं पातुमिच्छामि
त्वत्तः कमललोचने ।
यदि दास्यसि नेच्छामि
नो दास्यसि पिबाम्यहम् ।।

The apparent meaning of the stanza involves a contradiction. The meaning of the stanza is "O Lotus - eyed one! I want to drink water from your hands. I do not want it if you give. I shall drink if you do not." **(Answers on PNo - 240)**

## ५. सुभाषितम्

गुणायन्ते दोषाः सुजनवदने दुर्जनमुखे
गुणा दोषायन्ते तदिदमपि नो विस्मयपदम् ।
महामेघः क्षारं पिबति कुरुते वारि मधुरं
फणी क्षीरं पीत्वा वमति गरलं दुःसहतरम् ।।१९।।

**पदविभागः** - गुणायन्ते, दोषाः, सुजनवदने, दुर्जनमुखे, गुणाः, दोषायन्ते, तत्, इदम्, अपि, नो, विस्मयपदम्, महामेघः, क्षारम्, पिबति, कुरुते, वारि, मधुरम्, फणी, क्षीरम्, पीत्वा, वमति, गरलम्, दुःसहतरम् ।

**प्रतिपदार्थः** - सुजनवदने - In the mouth of noble men दोषाः - defects गुणायन्ते - change into good qualities. दुर्जनमुखे - In the mouth of the wicked गुणाः - good qualities दोषायन्ते - change into faults. तत् - that इदम् अपि - and this न विस्मयपदम् - are not strange. महामेघः - The big cloud क्षारं पिबति - drinks salty water (and) वारि मधुरं कुरुते - makes it sweet. फणी - The serpent क्षीरं पीत्वा - having drunk milk दुःसहतरं गरलं वमति - spits the most virulent poison.

**तात्पर्यम्** - Defects turn into virtues when they come from good persons. On the other hand, virtues turn into defects when they come from the wicked. There is nothing surprising in this. While the big cloud takes in salty water from the sea and showers sweet rain water. The serpent drinks milk, but emits intolerable poison. Good people are comparable to the cloud and the wicked are like serpents.

वनेऽपि सिंहा मृगमांसभक्षिणो
बुभुक्षिता नैव तृणं चरन्ति ।
एवं कुलीना व्यसनाभिभूता
न नीचकर्माणि समाचरन्ति ।।२०।।

**पदविभागः** - Write the पदविभाग yourself. It is quite easy. (व्यसनाभिभूताः = overcome by difficulties)

**प्रतिपदार्थः** - वने - In the forest मृगमांसभक्षिणः सिंहाः - lions that eat the flesh of (other) animals बुभुक्षिताः अपि - even when hungry तृणम् न चरन्ति एव - do not graze on grass. एवम् - Similarly, व्यसनाभिभूताः कुलीनाः - men of high birth who are in difficulty नीचकर्माणि न समाचरन्ति - do not do bad things.

**तात्पर्यम्** - Lions which feed on the flesh of wild animals do not eat

grass even when they are very hungry. Similarly, people of noble origin do not stoop to a low level and commit crimes even when they are in adversity.

## ६. पदसङ्ग्रहः

**क्षिप्** - to throw

१. क्षिपति २. क्षिप्यते ३. क्षेप्स्यति
४. क्षेप्तव्यम् - क्षेपणीयम् ५. क्षिप्तः - क्षिप्ता - क्षिप्तम् ६. क्षिप्तवान् - क्षिप्तवती ७. क्षिपन् - क्षिपन्ती - क्षिपती ८. क्षिप्त्वा - निक्षिप्य ९. क्षेप्तुम् ।

**खन्** - to dig

१. खनति २. खन्यते - खायते ३. खनिष्यति
४. खनितव्यम् - खननीयम् ५. खातः - खाता - खातम् ६. खातवान् - खातवती ७. खनन् - खनन्ती ८. खनित्वा - खात्वा - उत्खाय ९. खनितुम् ।

**खेल्** - to play

१. खेलति २. खेल्यते ३. खेलिष्यति
४. खेलितव्यम् - खेलनीयम् ५. खेलितः - खेलिता - खेलितम् ६. खेलितवान् - खेलितवती ७. खेलन् - खेलन्ती ८. खेलित्वा - प्रखेल्य ९. खेलितुम् ।

**गद्** - to tell

१. गदति २. गद्यते ३. गदिष्यति
४. गदितव्यम् - गदनीयम् ५. गदितः - गदिता - गदितम् ६. गदितवान् - गदितवती ७. गदन् - गदन्ती ८. गदित्वा - निगद्य ९. गदितुम् ।

**गर्ज** - to roar

१. गर्जति २. गर्ज्यते ३. गर्जिष्यति
४. गर्जितव्यम् - गर्जनीयम् ५. गर्जितः - गर्जिता - गर्जितम् ६. गर्जितवान् - गर्जितवती ७. गर्जन् - गर्जन्ती ८. गर्जित्वा - सङ्गर्ज्य ९. गर्जितुम् ।

# ७. काव्यकथा

## रघुवंशस्य अवनतिः

अमात्याः अतिथिमहाराजस्य पट्टाभिषेकं कृतवन्तः । अतिथिः उदारपुरुषः । सः पट्टाभिषेकसमये कारागृहे स्थितानां जनानां विमोचनं कृतवान् । पञ्जरे स्थितानां शुकानाम् अपि विमोचनं कृतवान् । तस्य परिजनेषु, प्रजासु, सचिवेषु च अतीव आदरः । विवादेषु स्वयम् एव धर्मासने उपविशति स्म । उचितं न्यायनिर्णयं प्रकटयति स्म । अनृतं तु स्वप्नेऽपि न उक्तवान् । योग्ये एव दानं कृतवान् । 'शौर्यरहिता नीतिः प्रयोजनाय न भवति । नीतिरहितं शौर्यं पशुचेष्टावत् भवति।' अतः अतिथिचक्रेश्वरः नीतिं शौर्यं च यथोचितम् अनुसृतवान् । सः प्रतिदिनं मन्त्रिभिः सह मन्त्रालोचनं करोति स्म । तथापि मन्त्रालोचनं गुप्तं भवति स्म । एवं साम-दान-भेद-दण्डैः अतिथिचक्रेश्वरः राज्यं परिपालितवान् । स्वर्गस्य देवेन्द्रः इव भूलोकस्य चक्रेश्वरः अभवत् ।

रघुवंशस्य नृपाः शैशवे विद्याम् अधीतवन्तः । यौवने सुखम् अनुभूतवन्तः । वृद्धावस्थायां वानप्रस्थाश्रमं स्वीकृतवन्तः । केचित् नृपाः योगेन शरीरपरित्यागमपि कृतवन्तः । इत्थं रघुवंशस्य नृपाः राज्यं, प्रजाः च योग्येन मार्गेण परिपालितवन्तः ।

अतिथिचक्रेश्वरात् विंशतितमः (२०) सुदर्शनो नृपः । सुदर्शनः स्वपुत्रम् अग्निवर्णम् अभिषिच्य तपः कर्तुं नैमिषारण्यं गतवान् ।

अग्निवर्णः रघुकुले निकृष्टः नृपः । तं द्रष्टुं यदा जनाः आगताः तदा सः बहिः पादद्वयं प्रदर्शितवान् । सदा कामासक्तः । अन्तःपुरे सर्वम् आयुः यापितवान् । ततः क्षयरोगेण पीडितः अभवत् । यौवने एव रोगात् मृतः । मरणसमये तस्य पत्नी गर्भिणी आसीत् । अतः सचिवाः गर्भस्थशिशोः एव अभिषेकं कृतवन्तः । ततः राज्ञी एव सचिवानां साहाय्येन प्रजापालनं कृतवती ।

## The Decline of the Raghu dynasty

The ministers coronated Atithi as their king. Atithi was a generous man. At the time of the coronation he released the people in prison. He also released parrots that were in cages. He had great regard for servants, subjects and ministers. When judicial proceedings were held he used to personally sit in the judgement seat. He used to give appropriate judgements. Not even in his dream did he lie. He used to give gifts only to the deserving. " A Policy without valour is of no use. Valour without the right policy would be a beastly action." Hence Atithi the emperor was pursuing the right policy and exhibiting valour judiciously. He used to hold counsel with ministers everyday. Yet, the deliberations were kept a secret. Thus employing *Sāma, Dāna, Bheda,* and *Daṇḍa* (conciliation, extending gifts, duplicity and war) emperor Atithi ruled the kingdom. Like Devendra in heaven he became the emperor on earth.

The kings of the Raghu race learnt the lores in their boyhood. In youth they enjoyed comforts. In old age they undertook *Vānaprastha āśrama* (the hermit's life). Some kings even gave up their lives through yoga. Thus the kings of the Raghu race looked after the kingdom and the subjects in the right way.

Sudarśana was the twentieth king after Atithi. Sudarśana coronated his son Agnivarṇa and went to the Naimiṣa forest for penance.

Agnivarṇa was the worst king in the Raghu dynasty. When people came to see him he used to show them his feet. He was always lustful. He spent all his life in a harem. Then he was afflicted with tuberculosis. He died due to the disease when he was young.

At the time of his death, his wife was pregnant. So the ministers performed the coronation ceremony of the child in the womb. Thereafter the queen, assisted by the ministers, took care of the subjects.

**एतेषाम् उत्तरं लिखत ।**

१. अतिथिः पट्टाभिषेकसमये किं कृतवान् ?

२. कीदृशी नीतिः प्रयोजनाय न भवति ?

३. रघुवंशस्य नृपाः शैशवे किं कृतवन्तः ?

४. सुदर्शनस्य पुत्रः कः ?

**(Answers on PNo - 240)**

## ८. अन्वयक्रमः

प्रविश्य तु महारण्यं रामो राजीवलोचनः ।
विराधं राक्षसं हत्वा शरभङ्गं ददर्श ह ।
सुतीक्ष्णं चाप्यगस्त्यं च अगस्त्यभ्रातरं तथा ।।

**पदविभागः** – च + अपि + अगस्त्यम् – The rest are separate words. Write the पदविभाग yourself.

**अन्वयः** – १. क्रियापदम् – ददर्श (मुख्यम्) प्रविश्य (अङ्गभूतम्) हत्वा (अङ्गभूतम्)

२. The nounforms in various vibhaktis, are as follows.

प्रथमा - रामः, राजीवलोचनः

द्वितीया - शरभङ्गं, सुतीक्ष्णम्, महारण्यम्, विराधम् राक्षसम्, अगस्त्यम्, अगस्त्यभ्रातरं च

अव्ययानि – च, अपि, तथा, तु, ह, च

३. When the words are properly arranged the अन्वय will be as follows-

राजीवलोचनः रामः महारण्यं प्रविश्य राक्षसं विराधं हत्वा शरभङ्गं सुतीक्ष्णम् अगस्त्यम् अगस्त्यभ्रातरं च ददर्श ।

**प्रतिपदार्थः** - राजीवलोचनः - The lotus-eyed, रामः - Rāma, प्रविश्य - having entered, महारण्यं - the big Daṇḍaka forest, हत्वा च - and having killed, राक्षसम् - the demon, विराधम् - Virādha, ददर्श - saw(met), शरभङ्गम् - (sages) Śarabhanga, सुतीक्ष्णम् - Sutīkṣṇa, अगस्त्यम् - Agastya, अगस्त्यभ्रातरं - and the brother of Agastya.

**तात्पर्यम्** – The Daṇḍaka forest was inhabited by many demons. Rāma went into that forest and killed Virādha who was the first of the many demons who were a big threat to the sages engaged in austerity. Rāma met the sages Śarabhanga, Sutīkṣṇa, Agastya and Agastya's brother there.

अगस्त्यवचनाच्चैव जग्राहैन्द्रं शरासनम् ।
खड्गं च परमप्रीतस्तूणी चाक्षयसायकौ ।।

**पदविभागः** - अगस्त्यवचनात्, च, एव, जग्राह, ऐन्द्रम्, शरासनम्, खड्गम्, च, परमप्रीतः, तूणी, च, अक्षयसायकौ ।

**अन्वयः** - क्रियापदम् - जग्राह
प्रथमा - परमप्रीतः
द्वितीया - ऐन्द्रं, शरासनम्, खड्गम्, अक्षयसायकौ, तूणी
पञ्चमी - अगस्त्यवचनात्

When arranged in prose order the sentence will be -

परमप्रीतः (रामः) अगस्त्यवचनात् ऐन्द्रं शरासनं, खड्गम्, अक्षयसायकौ तूणी च जग्राह ।

**प्रतिपदार्थः** - परमप्रीतः (रामः) - Rāma who was extremely happy, अगस्त्यवचनात् - following the advice of (sage) Agastya, जग्राह - took, ऐन्द्रम् शरासनम् - Indra's bow, खड्गम् - a sword, तूणी च - and two quivers, अक्षयसायकौ - in which the arrows would never be exhausted.

**तात्पर्यम्** – Sage Agastya had with him a bow which Indra had given him earlier, a sword and a pair of quivers that would never be empty. On coming to know of the exile of Rāma, he gave him these weapons that were with him. Rāma accepted the weapons very humbly. Agastya was happy that they were given to the most deserving person. As a kṣatriya Rāma felt very happy to be in possession of these divine weapons.

The story of Rāmāyaṇa that followed is known to all. So, we conclude this lesson here with the phalaśṛti -

एतदाख्यानमायुष्यं पठन् रामायणं नरः ।
सपुत्रपौत्रः सगणः प्रेत्य स्वर्गे महीयते ।।

One who reads this story of Rāmāyaṇa will live happily along with his sons, grand sons and relatives and after leaving this world, will be honoured in heaven.

## १. अनुवादपद्धतिः

Read the following sentences carefully.

1. I don't know = **अहं** न जानामि ।
2. I want = **मह्यम्** आवश्यकम् ।
3. I have a headache = **मम** शिरोवेदना अस्ति ।
4. He told me = **माम्** अवदत् ।
5. I am intelligent = **मयि** बुद्धिः अस्ति ।

In the above sentences the word 'I' is translated as अहम्, मह्यम्, मम, माम्, मयि in different cases. What is the reason for this ?

Every language has its own style and standards (भाषामर्यादा). Translation will be perfect only when one knows this. Otherwise, it will be absurd.

Here are some more examples.

1. I came on a bicycle = मया **द्विचक्रिकया** आगतम् ।

2. He came by bus = सः **लोकयानेन** आगतवान् ।
3. Translate into Samskrit = **संस्कृतेन** अनुवदत ।
4. Talk in Samskrit = **संस्कृतेन** सम्भाषणं कुरुत ।
5. He bought the pen for ten rupees = सः **दशभिः रूप्यकैः** लेखनीं क्रीतवान् ।
6. The shop keeper sold (it) for three rupees = आपणिकः **त्रिभिः रूप्यकैः** विक्रीतवान् ।

Note the change in the use of cases in the two languages. If one is not aware of these features of the language the translation will obviously be wrong.

**I.** Translate the following sentences.

उदा - Milk has to be drunk - क्षीरं पातव्यम् ।

1. I did not know this matter at all.
2. He goes to the office by bus.
3. I bought three pens for ten rupees.
4. Talking in Samskrit is very easy.
5. You did not tell me this yersterday.
6. Travelling by bus is inexpensive.
7. I have written the story in Samskrit.

## १०. सन्धिः

In the previous lessons you did the exercise of spliting and joining two words. Now, you will learn to split and join more than two words.

---

**उत्तराणि**

I. १. एषः विषयः मया न ज्ञातः एव ।
२. सः लोकयानेन कार्यालयं गच्छति ।
३. अहं दशरूप्यकैः त्रिस्रः लेखनीः क्रीतवती ।
४. संस्कृतेन सम्भाषणं बहु सुलभम् ।
५. एतत् भवान् ह्यः मां न उक्तवान् ।
६. लोकयानेन गच्छति चेत् व्ययः न्यूनः भवति ।
७. अहं कथां संस्कृतेन लिखितवती/लिखितवान् ।

## अभ्यासः

**I.** Join the following words and name the Sandhis.

उदा - पठन्ति + इति + अत्र = पठन्तीत्यत्र (सवर्णदीर्घः + यण् सन्धिः)

१. अत्र + एव + उक्तम् = ......... (.......+.......)

२. विद्यालये + अपि + अस्मिन् = ......... (.......+.......)

३. मुनिषु + अस्ति + आदरः = ......... (.......+.......)

४. उत्तर + उत्तर + उन्नतिः = ......... (.......+.......)

५. गणेश + उत्सवो + अस्ति = ......... (.......+.......)

६. परम + उन्नत + अधिकारः = ......... (.......+.......)

७. सम्भाषण + अभ्यास + इच्छा = ......... (.......+.......)

८. तस्य + अस्ति + अधुना = ......... (.......+.......)

९. अत्र + आगच्छ + इति = ......... (.......+.......)

१०. पर + उपकार + अमृतम् = ......... (.......+.......)

**II.** Split the following words and Name the Sandhis.

उदा - तस्मायस्त्येतत् = तस्मै + अस्ति + एतत्
(यान्तवान्तादेशः+यण्)

१. दिनान्तेऽस्ति = ------------------------

२. गणेशोपासनम् = ------------------------

३. आद्यक्षरावली = ------------------------

४. चतुर्थेऽङ्केऽस्ति = ------------------------

५. देवोपासनोत्सुकः = ------------------------

६. इत्यत्रोक्तम् = ------------------------

७. गच्छामीत्युवाच = ------------------------

८. कार्यालयेष्वपि = ------------------------

९. नान्यत्रासीत् = ------------------------

१०. सत्यप्येवम् = ------------------------

**III.** Split the underlined words in the following paragraph and name the Sandhis.

पवित्रोऽयं भारतदेशः । देशेऽस्मिन् अहं जातः । एतस्यैव देशस्य पुत्राः महामेधाविनः । प्रातः प्रतिदिनम् एतां भूमिं नत्वाहम् उत्तिष्ठामि । पादस्पर्शं क्षमस्वेति प्रार्थनां करोमि । सर्वास्वपि संस्कृतिषु अत्रत्यास्त्यतिप्राचीना । अतः भारतमातैषा वन्द्यास्ति । अतः नमाम्यहं भारतमातरम् । वन्देऽम्ब त्वाम् इति वदामि । क्वास्त्यन्या मातृभूमिसदृशी ? अतः कुर्याम वयं प्रतिदिनं मात्रर्चनम् । उत्तरोत्तरं वर्धतां भारतकीर्तिः । सर्वत्रास्तु यशोगाथैतस्याः ।

## ११. सङ्ख्याविषयाः

**Famous elevens and twelves**

एकादश रुद्राः – महादेवः, शिवः, रुद्रः, शङ्करः, नीललोहितः, ईशानः, विजयः, भीमः, देवदेवः, भवोद्भवः, आदित्यः ।

---

**सन्धिः**

I. १. अत्रैवोक्तम् (वृद्धिः+गुणः) २. विद्यालयेऽप्यस्मिन् (पूर्वरूपम्+यण्) ३. मुनिष्वस्त्यादरः (यण्+यण्) ४. उत्तरोत्तरोन्नतिः (गुणः+गुणः) ५. गणेशोत्सवोऽस्ति (गुणः+पूर्वरूपम्) ६. परमोन्नताधिकारः (गुणः+स.दी.) ७. सम्भाषणाभ्यासेच्छा (स.दी.+गुणः) ८. तस्यास्त्यधुना (स.दी.+गुणः) ९. अत्रागच्छेति (स.दी.+गुणः) १०. परोपकारामृतम् (गुणः+स.दी.)

II. १. दिन+अन्ते+अस्ति (स.दी.+पूर्वरूपम्) २. गण+ईश+उपासनम् (गुणः+गुणः) ३. आदि+अक्षर+आवली (यण्+स.दी.) ४. चतुर्थे+अङ्के+अस्ति (पू.रू.+पू.रू.) ५. देव+उपासन+उत्सुकः (गुणः+गुणः) ६. इति+अत्र+उक्तम् (यण्+गुणः) ७. गच्छामि +इति+उवाच (स.दी.+यण्) ८. कार्य+आलयेषु+अपि (स.दी.+यण्) ९. न+अन्यत्र+ आसीत् (स.दी.+स.दी.) १०. सति+अपि+एवम् (यण्+यण्)

III. १. पवित्रो+अयम् - पू.रू. २. देशे+अस्मिन् - पू.रू. ३. एतस्य+एव - वृद्धिः ४. नतु+ अहम् - यण् ५. क्षमस्व+इति - गुणः ६. सर्वासु+अपि - यण् ७. अत्रत्या+अस्ति+अतिप्राचीना - स.दी.+यण् ८. भारतमाता+एषा - वृद्धिः ९. वन्द्या+अस्ति - स.दी. १०. नमामि+अहम् - यण् ११. वन्दे+अम्ब - पू.रू. १२. क्व+अस्ति+अन्या - स.दी.+यण् १३. मातृ+अर्चनम् - यण् १४. उत्तर+उत्तरम् - गुणः १५. सर्वत्र+अस्तु - स.दी. १६. यशोगाथा+एतस्याः - वृद्धिः

द्वादश आदित्याः - मित्रः, रविः, सूर्यः, भानुः, खगः, पूषा, हिरण्यगर्भः, मरीचिः, आदित्यः, सविता, अर्कः, भास्करः ।

द्वादश राशयः - मेषः, वृषभः, मिथुनः, कर्कटकः, सिंहः, कन्या, तुला, वृश्चिकः, धनुः, मकरः, कुम्भः, मीनः ।

द्वादश मासाः - चैत्रः, वैशाखः, ज्येष्ठः, आषाढः, श्रावणः, भाद्रपदः, आश्वयुजः, कार्त्तिकः, मार्गशीर्षः, पुष्यः, माघः, फाल्गुनः ।

**Tradition**

Benediction to the Navagrahas

नमः सूर्याय सोमाय मङ्गलाय बुधाय च ।
गुरुशुक्रशनिभ्यश्च राहवे केतवे नमः ।।

Salutation to Sūrya, Soma, Mangala, Budha, Guru, Śukra, Śani, Rāhu and Ketu.

**Answer to the riddle**

The contradiction is resolved thus. Split the word - 'दास्यसि' as 'दासी + असि' (if you are a slave girl) 'नो दासी असि' - if you are not a slave girl. Only if दास्यसि is taken as a verb, a contradiction will arise.

# परिचयः - दशमः पाठः

## प्रश्नाः

I. Identify the voice of the following sentences.

१. सः विद्यालयं गच्छेत् । (-----------)
२. तेन क्रीडनीयम् । (-----------)
३. भक्तैः देवः वन्द्यते । (-----------)
४. वृद्धैः कम्प्यते । (-----------)
५. बालैः कोलाहलः क्रियते । (-----------)
६. सीता वनं गतवती । (-----------)
७. महाराजेन प्रजाः अरक्ष्यन्त । (-----------)
८. त्वम् असत्यम् उक्तवान् । (-----------)
९. त्वया स्थीयताम् । (-----------)
१०. भगवता भक्तः अनुगृह्यते । (-----------)

II. Match the following according to the rules of भावेप्रयोग ।

| अ | आ |
|---|---|
| १. कर्तृपदम् | अ. प्रथमपुरुषे एकवचने |
| २. कर्मपदम् | आ. तृतीयाविभक्तौ |
| ३. क्रियापदम् | इ. न भवति |

III. Translate into Samskrit in Impersonal voice.

1. Let us play.
2. We get up.
3. Lotuses bloom.
4. Girls ran.
5. Babies cried.

**(Answers on PNo - 240)**

## परिचयः - एकादशः पाठः

**।। आपदि स्फुरति प्रज्ञा यस्य धीरः स एव हि ।।**

'He whose wisdom flashes in times of adversity, is indeed brave.'

## (अ) क्रियापदानि (गणशः)

You have learnt the verb forms in the Pravesha level. Verbs are of three kinds viz., परस्मैपदिनः, आत्मनेपदिनः and उभयपदिनः । Each verb is conjugated in ten Lakāras. An उभयपदी verb will have twenty Lakāra forms (ten of परस्मैपदी and ten of आत्मनेपदी). Verb roots are classified into ten gaṇas. These gaṇas are known as प्रथम, द्वितीय .... etc. They are also named after the first धातु in each गण as भ्वादिः ( a गण in which भू is the first धातु), अदादिः (where अद् is the first धातु) and so on.

At Pravesha level the ten lakāra forms of one परस्मैपदी and one आत्मनेपदी धातु, are given. In this level five Lakāra forms of roots of all gaṇas in Parasmaipada and Atmanepada are given. For general communication this is sufficient. It is advantageous if you learn these by heart.

## १. भ्वादिः (प्रथमः गणः)

### (अ) भू - सत्तायाम् (परस्मैपदी)

**वर्तमाने लट् (Present tense)** **अनद्यतनभूते लङ् (Past tense)**

| | | | | | |
|---|---|---|---|---|---|
| भवति | भवतः | भवन्ति | अभवत् | अभवताम् | अभवन् |
| भवसि | भवथः | भवथ | अभवः | अभवतम् | अभवत |
| भवामि | भवावः | भवामः | अभवम् | अभवाव | अभवाम |

**भविष्यति लृट् (Future tense)** **विधौ लिङ् (Optative mood)**

| | | | | | |
|---|---|---|---|---|---|
| भविष्यति | भविष्यतः | भविष्यन्ति | भवेत् | भवेताम् | भवेयुः |
| भविष्यसि | भविष्यथः | भविष्यथ | भवेः | भवेतम् | भवेत |
| भविष्यामि | भविष्यावः | भविष्यामः | भवेयम् | भवेव | भवेम |

**आज्ञायां लोट् (Imperative mood)**

| | | |
|---|---|---|
| भवतु, भवतात् | भवताम् | भवन्तु |
| भव, भवतात् | भवतम् | भवत |
| भवानि | भवाव | भवाम |

### (आ) वदि (वन्द्) - अभिवादनस्तुत्योः (आत्मनेपदी)

**लट्** **लङ्**

| | | | | | |
|---|---|---|---|---|---|
| वन्दते | वन्देते | वन्दन्ते | अवन्दत | अवन्देताम् | अवन्दन्त |
| वन्दसे | वन्देथे | वन्दध्वे | अवन्दथाः | अवन्देथाम् | अवन्दध्वम् |
| वन्दे | वन्दावहे | वन्दामहे | अवन्दे | अवन्दावहि | अवन्दामहि |

**लृट्** **लिङ्**

| | | | | | |
|---|---|---|---|---|---|
| वन्दिष्यते | वन्दिष्येते | वन्दिष्यन्ते | वन्देत | वन्देयाताम् | वन्देरन् |
| वन्दिष्यसे | वन्दिष्येथे | वन्दिष्यध्वे | वन्देथाः | वन्देयाथाम् | वन्देध्वम् |
| वन्दिष्ये | वन्दिष्यावहे | वन्दिष्यामहे | वन्देय | वन्देवहि | वन्देमहि |

### लोट्

| | | |
|---|---|---|
| वन्दताम् | वन्देताम् | वन्दन्ताम् |
| वन्दस्व | वन्देथाम् | वन्दध्वम् |
| वन्दै | वन्दावहै | वन्दामहै |

## २. अदादिः (द्वितीयः गणः)

### (अ) या - प्रापणे (परस्मैपदी)

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| याति | यातः | यान्ति | अयात् | अयाताम् | अयुः, अयान् |
| यासि | याथः | याथ | अयाः | अयातम् | अयात |
| यामि | यावः | यामः | अयाम् | अयाव | अयाम |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| यास्यति | यास्यतः | यास्यन्ति | यायात् | यायाताम् | यायुः |
| यास्यसि | यास्यथः | यास्यथ | यायाः | यायातम् | यायात |
| यास्यामि | यास्यावः | यास्यामः | यायाम् | यायाव | यायाम |

### लोट्

| | | |
|---|---|---|
| यातु, यातात् | याताम् | यान्तु |
| याहि, यातात् | यातम् | यात |
| यानि | याव | याम |

### (आ) शीङ् - स्वप्ने (शयने) (आत्मनेपदी)

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| शेते | शयाते | शेरते | अशेत | अशेयाताम् | अशेरत |
| शेषे | शयाथे | शेध्वे | अशेथाः | अशेयाथाम् | अशेध्वम् |
| शये | शेवहे | शेमहे | अशेयि | अशेवहि | अशेमहि |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| शयिष्यते | शयिष्येते | शयिष्यन्ते | शयीत | शयीयाताम् | शयीरन् |
| शयिष्यसे | शयिष्येथे | शयिष्यध्वे | शयीथाः | शयीयाथाम् | शयीध्वम् |
| शयिष्ये | शयिष्यावहे | शयिष्यामहे | शयीय | शयीवहि | शयीमहि |

**लोट्**

| | | |
|---|---|---|
| शेताम् | शयाताम् | शेरताम् |
| शेष्व | शयाथाम् | शेध्वम् |
| शयै | शयावहै | शयामहै |

## ३. जुहोत्यादिः (तृतीयः गणः)

### (ङ) दाञ् (दा) - दाने (उभयपदी)

**(अ) परस्मैपदिरूपाणि**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| ददाति | दत्तः | ददति | अददात् | अदत्ताम् | अददुः |
| ददासि | दत्थः | दत्थ | अददाः | अदत्तम् | अदत्त |
| ददामि | दद्वः | दद्मः | अददाम् | अदद्व | अदद्म |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| दास्यति | दास्यतः | दास्यन्ति | दद्यात् | दद्याताम् | दद्युः |
| दास्यसि | दास्यथः | दास्यथ | दद्याः | दद्यातम् | दद्यात |
| दास्यामि | दास्यावः | दास्यामः | दद्याम् | दद्याव | दद्याम |

**लोट्**

| | | |
|---|---|---|
| ददातु, दत्तात् | दत्ताम् | ददतु |
| देहि, दत्तात् | दत्तम् | दत्त |
| ददानि | ददाव | ददाम |

**(आ) आत्मनेपदिरूपाणि**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| दत्ते | ददाते | ददते | अदत्त | अददाताम् | अददत |
| दत्से | ददाथे | दद्ध्वे | अदत्थाः | अददाथाम् | अदद्ध्वम् |
| ददे | दद्वहे | दद्महे | अददि | अदद्वहि | अदद्महि |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| दास्यते | दास्येते | दास्यन्ते | ददीत | ददीयाताम् | ददीरन् |
| दास्यसे | दास्येथे | दास्यध्वे | ददीथाः | ददीयाथाम् | ददीध्वम् |
| दास्ये | दास्यावहे | दास्यामहे | ददीय | ददीवहि | ददीमहि |

**लोट्**

| | | |
|---|---|---|
| दत्ताम् | ददाताम् | ददताम् |
| दत्स्व | ददाथाम् | दद्ध्वम् |
| ददै | ददावहै | ददामहै |

## ४. दिवादिः (चतुर्थः गणः)

### (अ) नृती (नृत्) - गात्रविक्षेपे (परस्मैपदी)

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| नृत्यति | नृत्यतः | नृत्यन्ति | अनृत्यत् | अनृत्यताम् | अनृत्यन् |
| नृत्यसि | नृत्यथः | नृत्यथ | अनृत्यः | अनृत्यतम् | अनृत्यत |
| नृत्यामि | नृत्यावः | नृत्यामः | अनृत्यम् | अनृत्याव | अनृत्याम |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| नर्तिष्यति | नर्तिष्यतः | नर्तिष्यन्ति | नृत्येत् | नृत्येताम् | नृत्येयुः |
| नर्तिष्यसि | नर्तिष्यथः | नर्तिष्यथ | नृत्येः | नृत्येतम् | नृत्येत |
| नर्तिष्यामि | नर्तिष्यावः | नर्तिष्यामः | नृत्येयम् | नृत्येव | नृत्येम |

**लोट्**

| | | |
|---|---|---|
| नृत्यतु, नृत्यतात् | नृत्यताम् | नृत्यन्तु |
| नृत्य, नृत्यतात् | नृत्यतम् | नृत्यत |
| नृत्यानि | नृत्याव | नृत्याम |

### (आ) विद् - सत्तायाम् (आत्मनेपदी)

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| विद्यते | विद्येते | विद्यन्ते | अविद्यत | अविद्येताम् | अविद्यन्त |
| विद्यसे | विद्येथे | विद्यध्वे | अविद्यथाः | अविद्येथाम् | अविद्यध्वम् |
| विद्ये | विद्यावहे | विद्यामहे | अविद्ये | अविद्यावहि | अविद्यामहि |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| वेत्स्यते | वेत्स्येते | वेत्स्यन्ते | विद्येत | विद्येयाताम् | विद्येरन् |
| वेत्स्यसे | वेत्स्येथे | वेत्स्यध्वे | विद्येथाः | विद्येयाथाम् | विद्येध्वम् |
| वेत्स्ये | वेत्स्यावहे | वेत्स्यामहे | विद्येय | विद्येवहि | विद्येमहि |

**लोट्**

| | | |
|---|---|---|
| विद्यताम् | विद्येताम् | विद्यन्ताम् |
| विद्यस्व | विद्येथाम् | विद्यध्वम् |
| विद्यै | विद्यावहै | विद्यामहै |

## ५. स्वादिः (पञ्चमः गणः)

**चिञ् (चि) - चयने (उभयपदी)**

**(अ) परस्मैपदिरूपाणि**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| चिनोति | चिनुतः | चिन्वन्ति | अचिनोत् | अचिनुताम् | अचिन्वन् |
| चिनोषि | चिनुथः | चिनुथ | अचिनोः | अचिनुतम् | अचिनुत |
| चिनोमि | चिनुवः | चिनुमः | अचिनवम् | अचिनुव | अचिनुम |
| | चिन्वः | चिन्मः | | अचिन्व | अचिन्म |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| चेष्यति | चेष्यतः | चेष्यन्ति | चिनुयात् | चिनुयाताम् | चिनुयुः |
| चेष्यसि | चेष्यथः | चेष्यथ | चिनुयाः | चिनुयातम् | चिनुयात |
| चेष्यामि | चेष्यावः | चेष्यामः | चिनुयाम् | चिनुयाव | चिनुयाम |

**लोट्**

| | | |
|---|---|---|
| चिनोतु, चिनुतात् | चिनुताम् | चिन्वन्तु |
| चिनु, चिनुतात् | चिनुतम् | चिनुत |
| चिनवानि | चिनवाव | चिनवाम |

**(आ) आत्मनेपदिरूपाणि**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| चिनुते | चिन्वाते | चिन्वते | अचिनुत | अचिन्वाताम् | अचिन्वत |
| चिनुषे | चिन्वाथे | चिनुध्वे | अचिनुथाः | अचिन्वाथाम् | अचिनुध्वम् |
| चिन्वे | { चिनुवहे / चिन्वहे | { चिनुमहे / चिन्महे | अचिन्वि | { अचिनुवहि / अचिन्वहि | { अचिनुमहि / अचिन्महि |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| चेष्यते | चेष्येते | चेष्यन्ते | चिन्वीत | चिन्वीयाताम् | चिन्वीरन् |
| चेष्यसे | चेष्येथे | चेष्यध्वे | चिन्वीथाः | चिन्वीयाथाम् | चिन्वीध्वम् |
| चेष्ये | चेष्यावहे | चेष्यामहे | चिन्वीय | चिन्वीवहि | चिन्वीमहि |

**लोट्**

| | | |
|---|---|---|
| चिनुताम् | चिन्वाताम् | चिन्वताम् |
| चिनुष्व | चिन्वाथाम् | चिनुध्वम् |
| चिनवै | चिनवावहै | चिनवामहै |

## ६. तुदादिः (षष्ठः गणः)

**तुद - व्यथने (उभयपदी)**

**(अ) परस्मैपदिरूपाणि**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| तुदति | तुदतः | तुदन्ति | अतुदत् | अतुदताम् | अतुदन् |
| तुदसि | तुदथः | तुदथ | अतुदः | अतुदतम् | अतुदत |
| तुदामि | तुदावः | तुदामः | अतुदम् | अतुदाव | अतुदाम |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| तोत्स्यति | तोत्स्यतः | तोत्स्यन्ति | तुदेत् | तुदेताम् | तुदेयुः |
| तोत्स्यसि | तोत्स्यथः | तोत्स्यथ | तुदेः | तुदेतम् | तुदेत |
| तोत्स्यामि | तोत्स्यावः | तोत्स्यामः | तुदेयम् | तुदेव | तुदेम |

**लोट्**

| | | |
|---|---|---|
| तुदतु, तुदतात् | तुदताम् | तुदन्तु |
| तुद, तुदतात् | तुदतम् | तुदत |
| तुदानि | तुदाव | तुदाम |

**(आ) आत्मनेपदिरूपाणि**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| तुदते | तुदेते | तुदन्ते | अतुदत | अतुदेताम् | अतुदन्त |
| तुदसे | तुदेथे | तुदध्वे | अतुदथाः | अतुदेथाम् | अतुदध्वम् |
| तुदे | तुदावहे | तुदामहे | अतुदे | अतुदावहि | अतुदामहि |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| तोत्स्यते | तोत्स्येते | तोत्स्यन्ते | तुदेत | तुदेयाताम् | तुदेरन् |
| तोत्स्यसे | तोत्स्येथे | तोत्स्यध्वे | तुदेथाः | तुदेयाथाम् | तुदेध्वम् |
| तोत्स्ये | तोत्स्यावहे | तोत्स्यामहे | तुदेय | तुदेवहि | तुदेमहि |

**लोट्**

| | | |
|---|---|---|
| तुदताम् | तुदेताम् | तुदन्ताम् |
| तुदस्व | तुदेथाम् | तुदध्वम् |
| तुदै | तुदावहै | तुदामहै |

## ७. रुधादिः (सप्तमः गणः)

**भिदिर् (भिद्) - विदारणे (उभयपदी)**

**(अ) परस्मैपदिरूपाणि**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| भिनत्ति | भिन्तः | भिन्दन्ति | अभिनत्-द् | अभिन्ताम् | अभिन्दन् |
| भिनत्सि | भिन्थः | भिन्थ | अभिनः | अभिन्तम् | अभिन्त |
| भिनद्मि | भिन्द्वः | भिन्द्मः | अभिनदम् | अभिन्द्व | अभिन्द्म |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| भेत्स्यति | भेत्स्यतः | भेत्स्यन्ति | भिन्द्यात् | भिन्द्याताम् | भिन्द्युः |
| भेत्स्यसि | भेत्स्यथः | भेत्स्यथ | भिन्द्याः | भिन्द्यातम् | भिन्द्यात |
| भेत्स्यामि | भेत्स्यावः | भेत्स्यामः | भिन्द्याम् | भिन्द्याव | भिन्द्याम |

**लोट्**

| | | |
|---|---|---|
| भिनत्तु, भिन्तात् | भिन्ताम् | भिन्दन्तु |
| भिन्द्धि, भिन्तात् | भिन्तम् | भिन्त |
| भिनदानि | भिनदाव | भिनदाम |

**(आ) आत्मनेपदिरूपाणि**

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| भिन्ते | भिन्दाते | भिन्दते | अभिन्त | अभिन्दाताम् | अभिन्दत |
| भिन्त्से | भिन्दाथे | भिन्द्ध्वे | अभिन्त्थाः | अभन्दाथाम् | अभिन्दध्वम् |
| भिन्दे | भिन्द्वहे | भिन्द्महे | अभिन्दि | अभिन्द्वहि | अभिन्द्महि |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| भेत्स्यते | भेत्स्येते | भेत्स्यन्ते | भिन्दीत | भिन्दीयाताम् | भिन्दीरन् |
| भेत्स्यसे | भेत्स्येथे | भेत्स्यध्वे | भिन्दीथाः | भिन्दीयाथाम् | भिन्दीध्वम् |
| भेत्स्ये | भेत्स्यावहे | भेत्स्यामहे | भिन्दीय | भिन्दीवहि | भिन्दीमहि |

**लोट्**

| | | |
|---|---|---|
| भिन्ताम् | भिन्दाताम् | भिन्दताम् |
| भिन्त्स्व | भिन्दाथाम् | भिन्द्ध्वम् |
| भिनदै | भिनदावहै | भिनदामहै |

## ८. तनादिः (अष्टमः गणः)

### (ड) कृञ् (कृ) - करणे (उभयपदी)

### (अ) परस्मैपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| करोति | कुरुतः | कुर्वन्ति | अकरोत् | अकुरुताम् | अकुर्वन् |
| करोषि | कुरुथः | कुरुथ | अकरोः | अकुरुतम् | अकुरुत |
| करोमि | कुर्वः | कुर्मः | अकरवम् | अकुर्व | अकुर्म |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| करिष्यति | करिष्यतः | करिष्यन्ति | कुर्यात् | कुर्याताम् | कुर्युः |
| करिष्यसि | करिष्यथः | करिष्यथ | कुर्याः | कुर्यातम् | कुर्यात |
| करिष्यामि | करिष्यावः | करिष्यामः | कुर्याम् | कुर्याव | कुर्याम |

**लोट्**

| | | |
|---|---|---|
| करोतु, कुरुतात् | कुरुताम् | कुर्वन्तु |
| कुरु, कुरुतात् | कुरुतम् | कुरुत |
| करवाणि | करवाव | करवाम |

## (आ) आत्मनेपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| कुरुते | कुर्वाते | कुर्वते | अकुरुत | अकुर्वाताम् | अकुर्वत |
| कुरुषे | कुर्वाथे | कुरुध्वे | अकुरुथाः | अकुर्वाथाम् | अकुरुध्वम् |
| कुर्वे | कुर्वहे | कुर्महे | अकुर्वि | अकुर्वहि | अकुर्महि |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| करिष्यते | करिष्येते | करिष्यन्ते | कुर्वीत | कुर्वीयाताम् | कुर्वीरन् |
| करिष्यसे | करिष्येथे | करिष्यध्वे | कुर्वीथाः | कुर्वीयाथाम् | कुर्वीध्वम् |
| करिष्ये | करिष्यावहे | करिष्यामहे | कुर्वीय | कुर्वीवहि | कुर्वीमहि |

| लोट् | | |
|---|---|---|
| कुरुताम् | कुर्वाताम् | कुर्वताम् |
| कुरुष्व | कुर्वाथाम् | कुरुध्वम् |
| करवै | करवावहै | करवामहै |

## ९. क्र्यादिः (नवमः गणः)

**क्रीञ् - द्रव्यविनिमये (उभयपदी)**

### (अ) परस्मैपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| क्रीणाति | क्रीणीतः | क्रीणन्ति | अक्रीणीत् | अक्रीणीताम् | अक्रीणन् |
| क्रीणासि | क्रीणीथः | क्रीणीथ | अक्रीणाः | अक्रीणीतम् | अक्रीणीत |
| क्रीणामि | क्रीणीवः | क्रीणीमः | अक्रीणाम् | अक्रीणीव | अक्रीणीम |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| क्रेष्यति | क्रेष्यतः | क्रेष्यन्ति | क्रीणीयात् | क्रीणीयाताम् | क्रीणीयुः |
| क्रेष्यसि | क्रेष्यथः | क्रेष्यथ | क्रीणीयाः | क्रीणीयातम् | क्रीणीयात |
| क्रेष्यामि | क्रेष्यावः | क्रेष्यामः | क्रीणीयाम् | क्रीणीयाव | क्रीणीयाम |

### लोट्

| | | |
|---|---|---|
| क्रीणातु, क्रीणीतात् | क्रीणीताम् | क्रीणन्तु |
| क्रीणीहि, क्रीणीतात् | क्रीणीतम् | क्रीणीत |
| क्रीणानि | क्रीणाव | क्रीणाम |

## (आ) आत्मनेपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| क्रीणीते | क्रीणाते | क्रीणते | अक्रीणीत | अक्रीणातम् | अक्रीणत |
| क्रीणीषे | क्रीणाथे | क्रीणीध्वे | अक्रीणीथाः | अक्रीणाथाम् | अक्रीणीध्वम् |
| क्रीणे | क्रिणीवहे | क्रिणीमहे | अक्रीणि | अक्रीणीवहि | अक्रीणीमहि |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| क्रेष्यते | क्रेष्येते | क्रेष्यन्ते | क्रीणीत | क्रीणीयाताम् | क्रीणीरन् |
| क्रेष्यसे | क्रेष्येथे | क्रेष्यध्वे | क्रीणीथाः | क्रीणीयाथाम् | क्रीणीध्वम् |
| क्रेष्ये | क्रेष्यावहे | क्रेष्यामहे | क्रीणीय | क्रीणीवहि | क्रीणीमहि |

### लोट्

| | | |
|---|---|---|
| क्रीणीताम् | क्रीणाताम् | क्रीणताम् |
| क्रीणीष्व | क्रीणाथाम् | क्रीणीध्वम् |
| क्रीणै | क्रीणावहै | क्रीणामहै |

## १०. चुरादिः (दशमः गणः)

### चुर - स्तेये (उभयपदी)

## (अ) परस्मैपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| चोरयति | चोरयतः | चोरयन्ति | अचोरयत् | अचोरयताम् | अचोरयन् |
| चोरयसि | चोरयथः | चोरयथ | अचोरयः | अचोरयतम् | अचोरयत |
| चोरयामि | चोरयावः | चोरयामः | अचोरयम् | अचोरयाव | अचोरयाम |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| चोरयिष्यति | चोरयिष्यतः | चोरयिष्यन्ति | चोरयेत् | चोरयेताम् | चोरयेयुः |
| चोरयिष्यसि | चोरयिष्यथः | चोरयिष्यथ | चोरयेः | चोरयेतम् | चोरयेत |
| चोरयिष्यामि | चोरयिष्यावः | चोरयिष्यामः | चोरयेयम् | चोरयेव | चोरयेम |

**लोट्**

| | | |
|---|---|---|
| चोरयतु, चोरयतात् | चोरयताम् | चोरयन्तु |
| चोरय, चोरयतात् | चोरयतम् | चोरयत |
| चोरयाणि | चोरयाव | चोरयाम |

## (आ) आत्मनेपदिरूपाणि

| लट् | | | लङ् | | |
|---|---|---|---|---|---|
| चोरयते | चोरयेते | चोरयन्ते | अचोरयत | अचोरयेताम् | अचोरयन्त |
| चोरयसे | चोरयेथे | चोरयध्वे | अचोरयथाः | अचोरयेथाम् | अचोरयध्वम् |
| चोरये | चोरयावहे | चोरयामहे | अचोरये | अचोरयावहि | अचोरयामहि |

| लृट् | | | लिङ् | | |
|---|---|---|---|---|---|
| चोरयिष्यते | चोरयिष्येते | चोरयिष्यन्ते | चोरयेत | चोरयेयाताम् | चोरयेरन् |
| चोरयिष्यसे | चोरयिष्येथे | चोरयिष्यध्वे | चोरयेथाः | चोरयेयाथाम् | चोरयेध्वम् |
| चोरयिष्ये | चोरयिष्यावहे | चोरयिष्यामहे | चोरयेय | चोरयेवहि | चोरयेमहि |

**लोट्**

| | | |
|---|---|---|
| चोरयताम् | चोरयेताम् | चोरयन्ताम् |
| चोरयस्व | चोरयेथाम् | चोरयध्वम् |
| चोरयै | चोरयावहै | चोरयामहै |

✣✣✣

# (आ) धातुरूपाणि

In Parichaya level you have learnt the use of Passive voice in detail. You are acquinted with the passive forms of verbs in present and past tense as also in imperative mood (प्रार्थना) and potential mood (विध्यर्थः) Given below are passive forms of selected verbs for your convenience.

- Following the present tense active form, the root (धातु) and its meaning are given.
- Then the passive forms in these lakāras, are given. In past tense you may either use तिङन्तरूपम् or कृदन्तरूपम् । Therefore, next to the तिङन्तरूपम् the भूतकृदन्तरूपम् is given in brackets.
- You know the use of विधिलिङ् forms in Active voice and that of तव्यदन्त and अनीयरन्त in passive. तव्यदन्त and अनीयरन्त are विध्यर्थककृदन्त forms. Instead of them we can use विध्यर्थकतिङन्त forms also. While introducing विध्यर्थ in Passive you were taught only the कृदन्त (तव्यदन्त and अनीयरन्त) forms. विध्यर्थकतिङन्त was not taught. But the passive forms of विध्यर्थकतिङन्त are given here with the participle form in brackets. This is done to see that your learning of कर्मणि विध्यर्थ is not incomplete.

Now, try to understand the above mentioned forms of a धातु used in sentences.

**पठति – पठ – to read**

१. पठ्यते २.अपठ्यत (पठितः) ३. पठ्यताम् ४. पठेत् ५. पठ्येत (पठितव्यम्/पठनीयम्)

१. पठ्यते – Passive Present tense
बालेन पाठः पठ्यते । The lesson is read by the boy.

२. अपठ्यत – Passive Past tense.
(पठितः) – Passive Past participle form.
बालेन पाठः अपठ्यत/पठितः । The lesson was read by the boy.

